# नवसंहिता

## नवविधानस्थानामार्य्याणां

विधिनिचयप्रदर्शिका

श्रीमदाचार्य्यकेशवचन्द्रसेनेन

इंलण्डीयभाषया निबद्धा

नवविधानमण्डल्या उपाध्यायेन

संस्कृतभाषयानूदिता

कलिकातायां रमानाथ-मजुमदार-वर्त्मस्थ-तृतीय-संख्यक-सद्मतः

प्रकाशिता च

कलिकातायां

गिरिश-विद्यारत्न-वर्त्मस्थ-चतुर्व्विंश-संख्यक-सद्मनि

गिरिश-विद्यारत्न-यन्त्रे

श्रीशशिभूषण-स्मृतिरत्न-भट्टाचार्य्येण

मुद्रिता

१८२२ शाके

मूल्यम्—॥० द्वादशानकानि।

# विज्ञप्तिः।



यदैव मूलसंहिता नवविधानपत्रिकायां प्राकाशि, तदैवाभूद्धर्म्मतत्त्वपत्रिकायामस्याः संस्कृतानुवादस्यारम्भः। समाप्तिमगमत् स संहिताकर्त्तुः स्वर्गारोहणादर्व्वाक्। वर्षात् पञ्चदशात् प्राक् ग्रन्थाकारेणारब्धमस्य मुद्राङ्कनं व्ययसाहाय्यशैथिल्यात् क्षान्तिमापत्। स्वर्गतस्य श्रीमद्विश्वनाथरायस्य स्मरणार्थं बन्धुवरेणैकेन प्रदत्तेन साहाय्येन पुनर्मुद्राङ्कनमारभ्यामुद्रितानंशान् प्रकटय्य मुद्रितविनष्टांशांश्च पूरयित्वोपस्थापितेयं संहिता नवीनार्य्यसमितौ। भवत्वियं तस्या गृहस्थजीवननियमनायेति शम्।



उपासनान्ते तस्मात्तं शिशुमन्तःपुरं नयेत् ।
मातुः समीपे वा तत्र कुटीरे भोजनस्य च ॥
तत्कालोचितसज्जाभिः शोभितं महिलागणैः ।
बालैः स्नेहोन्नतानेव प्रहृतैरपलक्षतः ॥ १६ ॥
आसने वाथ पीठे तं शिशुं समुपवेशयेत् ॥ १७ ॥
अन्नञ्च व्यञ्जनं नानाविधानि च फलानि च ।
मिष्टान्नानि च खाद्यानि तस्याग्रे सज्जयेत् मुदा ॥ १८ ॥
अन्नमारभ्य सर्व्वेषां किञ्चित् किञ्चिन्मुखे ततः ।
शिशोर्माता स्वयं दद्यात् वदन्त्येवं समाहिता ॥
इदमन्नमहं तुभ्यं ददामि परमेश्वरः ।
आशिषेदं योजयतु तव मङ्गलहेतवे ॥ १९ ॥

१६। अधुना अन्नप्राशनानुष्ठानमाह उपासनान्त इति। उपासनान्ते तस्मात् उपासनास्थानात् तं शिशुम् अन्तःपुरं मातुः समीपे नयेत्। ततः सा माता तं शिशुं तत्कालोचितसज्जाभिः शोभितं भोजनस्य च कुटीरे स्वहस्तेन अथवा स्नेहोन्नतानेन प्रहृतैः महिलागणैः बालैः सह नयेदिति शेषः।

१७। आसनेति। आसने अथवा पीठे तं शिशुं समुपवेशयेत्।

१८। अन्नमिति। अन्नं व्यञ्जनं च नानाविधानि फलानि च मिष्टान्नानि खाद्यानि च मुदा तस्य शिशोः अग्रे सज्जयेत्।

१९। अन्नमिति। ततः माता अन्नम् आरभ्य सर्व्वेषां खाद्यानां किञ्चित् किञ्चित् शिशोः मुखे समाहिता सती एवं वदन्ती स्वयं दद्यात्—अहं तुभ्यम् इदम् अन्नं ददामि, तव मङ्गलहेतवे परमेश्वरः इदम् अन्नम् आशिषा योजयतु।

अनन्तरं प्रधानाश्च महिलाः स्वजनेषु च ।
निमन्त्रिताश्च दद्युस्तन्मुखेऽन्नञ्च यथाक्रमम् ॥ २० ॥
शङ्खध्वनिर्महिलाभिर्बालैरानन्दनिस्वनः ।
क्रियेत कौतुकेनायं शिशुः खादति वै यदा ॥ २१ ॥
बहिर्भागे ध्वनिर्वाद्योत्थितः स्यान्मधुरस्तदा ॥ २२ ॥
अन्नाशनान्ते बालं तं सभाकुट्टिमकं नयेत् ।
यत्राशिषं चुम्बनञ्चोपहारञ्च लभेत सः ॥ २३ ॥

इति नामकरणम् ।

---

## दीक्षा ।

शिक्षा दीयेत बालायै बालकाय च सम्मता ।
साधारणानां श्रेयानां सर्व्वशाखासु तासु च ॥ १ ॥

२० । अनन्तरमिति । अनन्तरं स्वजनेषु प्रधानाः महिलाश्च निमन्त्रिताश्च तन्मुखे यथाक्रमम् अन्नम् दद्युः ।

२१ । शङ्खेति । यदा अन्नं शिशुः खादति, तदा महिलाभिः शङ्खध्वनिः बालैः आनन्दनिःस्वनः कौतुकेन क्रियेत ।

२२ । बहिरिति । तदा बहिर्भागे वाद्योत्थितः मधुरः ध्वनिः स्यात् ।

२३ । अन्नेति । अन्नाशनान्ते तं बालं सभाकुट्टिमकं नयेत् । यत्र सभाकुट्टिमे सः बालः आशिषं चुम्बनम् उपहारं च लभेत ।

---

१ । दीक्षायाः पूर्व्वलक्षणान्‌ विधेति । साधारणानां श्रेयानां तासु प्रसिद्धासु शास्त्राणां विषयाणां सर्व्वशाखासु च बालायै बालकाय च सम्मता उपयुक्ता शिक्षा दीयेत ।

विशेषशिक्षादानाय यदोपयोगितां गताः।
पुरोधसा वा तेनेह मनोनीतेन धीमता।
नवविधानतत्त्वञ्च शिक्षेरन् मौलिकं हि ते ॥ २ ॥
षोडशे षोडशप्राये वाथ वयसि बालकम्।
प्राक् विवाहाद्विधिपूर्व्वं मण्डल्यां तं निवेशयेत्।
नूतनस्य विधानस्यानूपयुक्तत्वशंसनम् ॥ ३ ॥
उपासनादिनेऽन्यत्र मन्दिरे पारिवारिके।
उपासनागृहे वाथ चान्यत्र वोपयोगिनि।
निर्व्वाहयेत् सुमनसा दीक्षाकर्म्म यथाविधि ॥ ४ ॥
दीक्षितव्यो विशेत् स्नानागारं गम्भीरचेतसा।
निर्द्दिष्टे दिवसे तत्राभिषेकेण परिष्कृतः ॥ ५ ॥

२। साधारणशिक्षानन्तरं किं कर्त्तव्यं तदाह विशेषेति। यदा विशेषशिक्षादानाय विशेषशिक्षायहणाय उपयोगितां गताः प्राप्ताः, तदा पुरोधसा परिवारस्य पुरोहितेन अथवा इह तेन पुरोधसा मनोनीतेन वा धीमता उपयुक्तेन शिक्षकेण मौलिकं नवविधानतत्त्वं च ते हि शिक्षेरन्।

३। षोडश इति। विवाहात् प्राक् षोडशे अथवा षोडशप्राये वयसि उपयुक्तत्वशंसनम् अनु तं बालकं विधिपूर्व्वं नूतनस्य विधानस्य मण्डल्यां निवेशयेत्।

४। उपासनेति। मन्दिरे उपासनादिने उपासनार्थं निर्द्दिष्टे दिने अन्यत्र तदतिरिक्ते दिने, अथवा पारिवारिके उपासनागृहे, उपयोगिनि अन्यत्र वा यथाविधि दीक्षाकर्म्म सुमनसा निर्व्वाहयेत्।

५। दीक्षितव्य इति। निर्द्दिष्टे दिवसे दीक्षितव्यः गम्भीरचेतसा स्नानागारं विशेत्, तत्र अभिषेकेण परिष्कृतः भवेदिति शेषः।

अभ्यङ्गे कारिते सिञ्चति वारि तु मूर्द्धनि ।
महिमा सच्चिदानन्द तवेति मनसा स्मरेत् ॥ ६ ॥
धातुनिर्म्मितपात्राच्च विधानध्वजचिह्नितात् ।
प्रोज्ज्वलात् वारि सिञ्चेत मूर्द्ध्नि तस्य पुरोधसा ।
मनसा दीक्षितव्योऽथ वदेत् श्रद्धासमन्वितः ॥
प्रभुर्वारिगतो देहं यथा मे शोधयत्यसौ ।
तथा मे हृदयं शोधयतु कुर्व्वन् हि निर्म्मलम् ॥
यथा शीतलयत्यत्र देहं शान्तिजलन्त्विदम् ।
तथाऽऽनयतु शान्तिश्चात्मनि मे करुणाजलम् ॥ ७ ॥
अभिषेकसमाप्तौ च दीक्षितव्यः पुरोहितः ।
ब्रूयुः समागताः शान्तिः शान्तिः शान्तिरितीह ते ॥ ८ ॥
पीतगैरिकप्रावारं हृतं शुक्लेन वाससा ।
प्रवेशयेद्गृहे तत्र निर्द्दिष्टे समये च सः ।
उपविष्टो भवेद्वेदीसम्मुखस्थासने शुभे ॥ ९ ॥

६ । अभ्यङ्ग इति । अभ्यङ्गे तैलाभ्यञ्जने कारिते मूर्द्धनि वारि तु सिञ्चति हे सच्चिदानन्द तव महिमा इति मनसा स्मरेत् ।

७ । धातुनिर्म्मितेति । विधानध्वजचिह्नितात् प्रोज्ज्वलात् धातुनिर्म्मितपात्रात् च तस्य मूर्द्ध्नि पुरोधसा वारि सिञ्चेत । अथ मनसा दीक्षितव्यः श्रद्धासमन्वितः सन् वदेत्— असौ वारिगतः प्रभुः यथा मे देहं शोधयति, तथा मे हृदयं निर्म्मलं कुर्व्वन् शोधयतु ; अत्र इदं शान्तिजलं तु यथा देहं शीतलयति, तथा मे आत्मनि करुणाजलं शान्तिं च आनयतु ।

८ । अभिषेक इति । अभिषेकसमाप्तौ दीक्षितव्यः, पुरोहितः, समागताः च ते शान्तिः शान्तिः शान्तिः इति इह ब्रूयुः ।

९ । पीतेति । शुक्लेन वाससा हृतं पीतः गैरिकः प्रावारः उत्तरीयं यस्य तं

प्रारम्भिकोपासनान्ते वदेदाचार्य्य आनय।
दीक्षार्थिनं विविक्षुर्यो मण्डल्यां परमेशितुः॥ १०॥
उपदेष्टा पिता वाथ बन्धुस्तस्य प्रवर्त्तकः।
वेदीसम्मुखमासाद्य वदेदेवं तदर्थकम्॥
आर्य्याचार्य्य समक्षं ते श्रीमन्तममुकन्त्विमम्।
उपानयामि ज्ञात्वेमं योग्यं स्वज्ञानतः पुनः।
प्रवेशायास्य मण्डल्यां नूतनस्य विधेरिह॥ ११॥
ततो दीक्षार्थिनं जिज्ञासेत सोऽयमिह क्रमात्॥ १२॥
(क) दीक्षार्थिन् किं विधानस्य मण्डल्या नूतनस्य च।
योक्तुमात्मानमिच्छुस्त्वं व्यञ्ज्यात् सम्मतिमोमिति॥
(ख) जानासि किं विश्वसिषि मूलतत्त्वानि चोमिति॥

दीक्षितव्यं निर्दिष्टे समये तव गृहे उपासनालये प्रवेशयेत्, स च शुभे वेदीसम्मुखस्थासने उपविष्टः भवेत्।

१०। प्रारम्भिकेति। प्रारम्भिकोपासनान्ते आचार्य्यः वदेत्—परमेशितुः मण्डल्यां यः विविक्षुः, दीक्षार्थिनं तम् आनय।

११। उपदेष्टेति। उपदेष्टा पिता अथवा तस्य बन्धुः प्रवर्त्तकः सन् वेदीसम्मुखम् आसाद्य तदर्थकम् एवं वदेत्,—आर्य्य आचार्य्य, तव समक्षं श्रीमन्तम् अमुकम् इमं स्वज्ञानतः पुनः योग्यं ज्ञात्वा इह नूतनस्य विधेः मण्डल्याम् अस्य प्रवेशाय अहम् उपानयामि।

१२। तत इति। ततः उपानयनानन्तरं सोऽयम् आचार्य्यः इह दीक्षार्थिनं क्रमात् यथाक्रमं जिज्ञासेत। क्रमेण जिज्ञासावदुत्तराणि।

(क) हे दीक्षार्थिन्, किं नूतनस्य विधानस्य मण्डल्या आत्मानं योक्तुं त्वम् इच्छुः? ओम् इति च सम्मतिं व्यञ्ज्यात् स दीक्षार्थीति शेषः।

(ख) जानासीति। नूतनस्य विधानस्य मूलतत्त्वानि किं जानासि विश्वसिषि च?

(ग) तदर्थं प्रभुणाहूतः किन्नु ? ओमिति चोत्तरम् ॥

(घ) अस्या विनयने वश्यभावं स्वीकर्त्तुमुद्यतः ।
सत्यस्य जीवने साक्षित्वमेतुं किं समुत्थितः ॥

(ङ) ओमीश्वरः सहायो मे भवत्विति ततो वदेत् ॥

(च) अद्वितीयः परोऽनन्तः पूर्णोऽयं सर्व्वशक्तिमान् ।
सर्व्वज्ञः सर्व्वकरुणः पुण्यः सुखमयः शुभः ॥
नित्यः सर्व्वगतः स्रष्टा पिता माता सुहृत् सखा ।
त्राता नेता च शास्तेति विश्वसिषि किमोमिति ॥

(छ) आत्माऽमरो नित्यकालोन्नतिभागिति ओमिति ॥

(ज) नैतिकानीश्वरस्याज्ञा विधिजातानि यानि च ।
विवेकस्य समादेशैराविःसन्तीह चात्मनि ॥

ओम् इति । जिज्ञासेत सम्मतिं यज्ञादित्यनुवर्त्तनेन जिज्ञासा आचार्य्यस्य तदुत्तरं दीक्षार्थिनः । एवं सर्व्वत्र विज्ञेयम् ।

(ग) तदर्थमिति । तदर्थं मण्डल्या आत्मानं योक्तुं प्रभुणा किन्नु आहूतः ? ओम् इति उत्तरम् ।

(घ) अस्या इति । अस्याः मण्डल्याः विनयने वश्यभावं स्वीकर्त्तुं किम् उद्यतः, जीवने सत्यस्य साक्षित्वम् एतुं किं समुत्थितः ?

(ङ) ओमिति । इति जिज्ञासानन्तरं दीक्षार्थी ओम्, ईश्वरः मे सहायः भवतु इति वदेत् ।

(च) अद्वितीय इति । अयम् ईश्वरः अद्वितीयः, परः, अनन्तः, पूर्णः, सर्व्वशक्ति-मान्, सर्व्वज्ञः, सर्व्वकरुणः, पुण्यः, सुखमयः, नित्यः, सर्व्वगतः, स्रष्टा, पिता, माता, सुहृत्, सखा, त्राता, नेता, शास्ता च इति किं विश्वसिषि ? ओम् इति ।

(छ) आत्मेति । आत्मा अमरः नित्यकालोन्नतिभाक् इति किं विश्वसिषि ? ओम् इति ।

(ज) नैतिकानीति । हे दीक्षार्थिन्, इह आत्मनि खलु सर्व्वस्मिन्

आम्नाय खलु सर्व्वस्मिन् धार्म्मिकत्वं हि तेषु किम्।
विश्वसिषि तथा नित्यं परमेशस्य सन्निधौ॥
गणनादानबाध्यत्वं कर्त्तव्यानां सयत्नकम्।
नानाविधानां निर्व्वाहस्येति धर्म्मस्य चैनसः॥
हेतोर्विचारितः स्यास्त्वं दण्डितो वा पुरस्कृतः।
इहामुत्रेति किमहो विश्वसिषि स चोमिति॥
(ञ) सार्व्वभौमिकमण्डल्यां किमु विश्वसिषि त्विह।
प्राचीनज्ञानजातस्य विज्ञानानां निधानकम्॥
नूतनानां स्वीकरोति या सर्व्वेष्वृषिसाधुषु।
समञ्जसत्वमेकत्वं शास्त्रेषु क्रमयोगताम्॥
विधानेषु पुनर्भेदसाधनानि जहाति च।
महीयसीं शान्तिमैकत्वं नियतमेव च॥
ज्ञानविश्वासयोर्योगभक्त्योर्व्वैराग्यकृत्ययोः।
सर्व्वोन्नतमयोः सामञ्जस्यं संविदधाति च॥
सर्व्वाजातीः सर्व्वसम्प्रदायान् पूर्णां करिष्यति।
एकं राज्यं परीवारमेकं कालेे स चोमिति॥

धार्म्मिकत्वम् आम्नाय यानि नैतिकानि ईश्वरस्य विधिजातानि विवेकस्य समादेशाः आविःसन्ति तेषु किं विश्वसिषि? नित्यं परमेशस्य सन्निधौ नानाविधानां कर्त्तव्यानां सयत्नं निर्व्वाहस्य त्वं गणनादानबाध्य इति, धर्म्मस्य एनसः च हेतोः त्वम् इह अमुत्र विचारितः दण्डितः पुरस्कृतः वा स्या इति, किम् अहो विश्वसिषि? स दीक्षार्थी ओम् इति।

(ञ) सार्व्वभौमिकेति। इह किमु तस्यां सार्व्वभौमिकमण्डल्यां विश्वसिषि, या मण्डली प्राचीनज्ञानजातस्य नूतनानां विज्ञानानां च निधा-

(ञ) नैसर्गिक्यां विशेषायां साधारण्याञ्च किं पुनः ।
प्रेरणायां विधातृत्वे विश्वसिषि च ओमिति ॥

(ट) सम्मानयसि यज्ञासि स्मृतीस्त्वं विविधाः किमु ?
ओं तावता यावदेताः प्रेरणाधीनधीभृताम् ।
साधुत्वस्य च भक्तेश्च ज्ञानस्य लिपयः पुनः ॥
विशेषस्य विधातृत्वस्येश्वरस्य विमुक्तये ।
जातीनां तत्र भावोऽस्य लिपिस्तु मानवस्य वै ॥

(ठ) ऋषीन् साधूंश्च मर्त्त्यग्रान् किं यज्ञासि मानयस्यहो ?
ओं तावता यावदेते आविष्कुर्व्वन्ति बिभ्रति ।
दैवचरित्रभिन्नांशान् शिक्षार्थं शोधनाय च ॥

नकम्, या सर्व्वेषु ऋषिसाधुषु समञ्जसत्वम्, सर्व्वेषु शास्त्रेषु एकत्वम्, सर्व्वेषु विधानेषु च क्रमयोगतां स्वीकरोति, भेदसाधनानि च पुनः जहाति, नियतम् एव शान्तिम् एकत्वम् च महीययते, सर्व्वोत्तमयोः ज्ञान-विश्वासयोः योगभक्त्योः वैराग्यसत्ययोः सामञ्जस्यं संविदधाति, पूर्णे काले सर्व्वाः जातीः सर्व्वसम्प्रदायान् एकं राज्यम् एकं परीवारं च करिष्यति ? स दीक्षार्थी—ओमिति ।

(ञ) नैसर्गिक्यामिति । विशेषायां साधारणायाञ्च नैसर्गिक्यां प्रेरणायां विधातृत्वे साधारणे विशेषे च किं पुनः विश्वसिषि ? स दीक्षार्थी—ओमिति ।

(ट) सम्मानयसीति । किमु त्वं विविधाः स्मृतीः यज्ञासि सम्मानयसि ? ओम् तावता, यावता एताः प्रेरणाधीनधीभृतां साधुत्वस्य भक्तेः च ज्ञानस्य च, जातीनां विमुक्तये पुनः ईश्वरस्य विशेषस्य विधातृत्वस्य लिपयः । तत्र अस्य परमेश्वरस्य भावः, लिपिः तु मानवस्य एव ।

(ठ) ऋषीनिति । मर्त्त्याग्रान् ऋषीन् साधून् च किम् अहो यज्ञासि

लोकानां दर्शयन्त्युच्चतरमादर्शमुत्तमम्।
प्रीतिः सम्माननां चैषु कर्त्तव्या मम सर्व्वदा ॥
अनुवृत्तिश्च तथाऽऽज्ञा सर्व्वं यद्वैषमात्मनि।
एकत्वापत्तिचेष्टा च यद्यदेषां परस्य च ॥

(ड) किं मतं तव? विश्वानमालोकार्पकमीशितुः।
शुभवार्त्ता च का? प्रेमा सर्व्वत्राणकरोऽस्य च ॥
कः स्वर्गः? जीवनस्त्वास्मिन् प्राप्यं सर्व्वत्र यत् पुनः।
का मण्डली? परेशस्याद्भ्रराज्यं हि यत्र तु।
सत्यं प्रेमा च पुण्यञ्च निखिलं मिलितं किल ॥

(ढ) स्वीकुरु त्वं सर्व्वशक्तेरग्रे विश्वासमात्मनः।

दीक्षार्थी—अमुके दिवसे मासि वर्षेऽमुकेऽद्य सम्मते।
अहं श्रीरमुकः पूर्णं विश्वासं स्वीकरोमि च ॥

मानयसि? ओम् तावता, यावता एते देवचरित्रभिन्नांशान् बिभ्रति आविष्कुर्व्वन्ति, लोकानां शिक्षार्थं शोधनाय च उच्चतरम् उत्तमम् आदर्शं दर्शयन्ति। एषु यत् सर्व्वं देशं तत्र सत्यतः सर्व्वदा प्रीतिः सम्माननना अनुवृत्तिः च मम कर्त्तव्या, एषां परस्य च यद् यत्, आत्मनि तस्य एकत्वापत्तिचेष्टा च कर्त्तव्या।

(ड) किमिति। किं तव मतम्? आलोकार्पकम् ईशितुः विधानम्। का तव शुभवार्त्ता च? सर्व्वत्राणकरः अस्य प्रेमा। कः तव स्वर्गः? अस्मिंश्च जीवनं यत् पुनः सर्व्वस्य प्राप्यम्। का तव मण्डली? परेशस्य अद्भ्रराज्यं यत्र तु सत्यं प्रेमा च पुण्यं च किल मिलितम्।

(ढ) स्वीकुर्व्विति। सर्व्वशक्तेः ईश्वरस्य अग्रे आत्मनः विश्वासं त्वं स्वीकुरु। दीक्षार्थी—अद्य अमुके दिवसे अमुके मासि अमुके वर्षे अहं

पवित्रपरमेशस्य सन्निधावत्र सर्व्वथा ।
विशुद्धत्राणधर्म्मस्य मूलतत्त्वेषु भक्तितः ॥
नूतनस्य विधानस्य मण्डल्यां प्रविशामि च ।
सहायः परमेशो मे भवत्वत्र चिरन्तनः ॥
आचार्य्यः—नाम्ना परस्य भारं त्वामर्पयाम्यनृतं पुनः ।
पापं सर्व्वविधं हातुं साम्प्रदायिकतामिह ॥
विश्वासस्य च पावित्र्यस्याथ त्वं नय जीवनम् ।
भक्तेः प्रेम्णश्च मण्डल्याः परस्य गौरवाय तु ॥
दीक्षार्थी—दयामय परित्राणप्रदं मह्यमनुग्रहम् ।
वितर त्वं हि यत् सत्यं कर्त्तुं ते गौरवान्वितम् ।
प्रमातुमुपयुक्तं मां मण्डल्याः स्यां क्षमश्चिरम् ॥
आचार्य्यः—त्वामाश्रास्तां प्रभुर्नित्यं त्वया वासं करोतु सः ।
(ग) नूतनस्य विधानस्याचार्य्यस्तस्मै च कीर्तनम् ।
दद्याद्द्वौ मण्डलीस्थौ चोत्थाय प्रतिनिधित्वतः ॥

श्री: अमुक: पवित्रपरमेश्वरस्य सन्निधौ विशुद्धत्राणधर्म्मस्य मूलतत्त्वेषु पूर्णं विश्वासं स्वीकरोमि, नूतनस्य विधानस्य मण्डल्यां प्रविशामि च। परमेश: अत्र मे चिरन्तन: सहाय: भवतु।

आचार्य्य:—परस्य नाम्ना त्वां सर्व्वविधम् अनृतं पापं साम्प्रदायिकतां पुन: इह हातुं भारम् अर्पयामि। मण्डल्या: परस्य तु गौरवाय त्वं विश्वासस्य पावित्र्यस्य च भक्ते: प्रेम्णश्च जीवनं नय।

दीक्षार्थी—दयामय, त्वं मह्यं परित्राणप्रदम् अनुग्रहं वितर यत् सत्यं तव गौरवान्वितं कर्त्तुं, मण्डल्या: उपयुक्तं प्रमातुं क्षम: स्याम्।

आचार्य्य:—प्रभु: त्वां आश्रास्तां, स त्वया नित्यं वासं करोतु।

(ग) नूतनस्येति। तस्मै आचार्य्य: नूतनस्य विधानस्य कीर्तनं दद्यात्।

शास्त्रसंग्रहमेकञ्च तथैकां नवसंहिताम् ।
दैनिकोपासनाहेतोरुपेयातां तथासनम् ॥
भ्रातृस्नेहेन तं तत्र स्वजेयातां मुदा ततः ।
भक्त्या प्रभुं नमस्कुर्य्याद्दीक्षार्थी मण्डली च सा ॥
शान्तिः शान्तिः शान्तिरिति वाचयेत समस्वरैः ॥

इति दीक्षा ।

---

## विवाहः ।

विवहेन्न वयोलाभात् प्राक् तारुण्यात् कदाचन ॥ १ ॥
शारीरमशिवं व्याधिक्लेशाकरो न केवलम् ।
सामाजिकोऽभिशापोऽयं यतोऽवनतिराशु च ॥
वंशानां जायतेऽकालकृतोद्वाहेऽत्र नैतिकम् ।
अकल्याणं महत् पापं प्रभोर्दृष्टावशंसयम् ॥ २ ॥

प्रतिनिधित्वतः मण्डल्याः प्रतिनिधीभूत्वा मण्डलीस्थौ द्वौ च उत्थाय एकं शास्त्रसंग्रहं तथा एकां नवसंहिताम्, तथा दैनिकोपासनाहेतोः आसनम् उपेयाताम्, ततः उपायनानन्तरं मुदा तं तत्र भ्रातृस्नेहेन स्वजेयाताम्। दीक्षार्थी भक्त्या प्रभुं नमस्कुर्य्यात्, सा मण्डली च समस्वरैः शान्तिः शान्तिः शान्तिः इति वाचयेत ।

---

१ । सम्प्रति विवाहानुष्ठानमाह विवहेदिति । तारुण्यात् वयोलाभात् प्राक् कदाचन न विवहेत् ।

२ । अकालकृतोद्वाहदोषमाह शारीरमिति । अत्र अकालकृतोद्वाह अयम् उद्वाहः न केवलं शारीरम् अशिवम् अमङ्गलं, व्याधीनां क्लेशानाञ्च आकरः, किन्तर्हि, सामाजिकः अभिशापः, यतः अकालकृतोद्वाहात् आशु वंशानाम् अवनतिः जायते, प्रभोः दृष्टौ असंशयं नैतिकम् अकल्याणं महत् पापम् ।

कुमारीत्वं माननीयं योऽवमानयतेऽन्वितः ।
दुष्टैरिन्द्रियवश्यत्वैः पापैरतिजुगुप्सितैः ॥ ३ ॥
विवाह्यन्तु वयो देशभेदान्निर्दिष्टमस्तु तत् ।
प्रकृत्या तद्विधिर्यस्मान्नियमः परमेष्ठिपितुः ॥ ४ ॥
कल्पनातोऽभिलाषाद्वाऽसत्वरं वाऽथ सत्वरम् ।
नोद्वहेद्दिशतु ह्यत्र प्रकृतिस्तूपयुक्तताम् ॥
जनभेदाच्छरीरस्य मनसो दारकर्म्मणि ॥ ५ ॥
न वयः केवलं देशभेदो वा स्वास्थ्यमप्युत ।
धनावस्था चरित्रं सम्मिलेयुः कालनिर्णये ॥ ६ ॥
इन्द्रियप्रेरणात्त्याय स्पृहां सांसारिकीं पुनः ।
न तु सोऽनुसरेत् स्वस्य चेष्टामत्र विचारणाम् ॥
पित्रोश्च रक्षकाणाञ्च सुपक्वां मन्त्रणां शुभाम् ॥ ७ ॥

३। कुमारीत्वसम्माननमाह कुमारीत्वमिति। कुमारीत्वं माननीयम्। यः अवमानयते कुमारीत्वमिति शेषः स दुष्टैः इन्द्रियवश्यत्वैः अतिजुगुप्सितैः पापैः च अन्वितः संयुक्तः।

४। न ह्यस्ति निर्दिष्टं विवाह्यं वयः, देशावस्थाभेदात् भिन्नत्वात् कथं तन्निर्दिष्टं कर्त्तव्यम् तदाह विवाह्यमिति। देशभेदात् तत् विवाह्यं वयः तु प्रकृत्या निर्दिष्टम् अस्तु यस्मात् तस्याः प्रकृतेः विधिः परमेष्ठिपितुः नियमः।

५। सत्वरत्वमसत्वरत्वं तत्र परिहार्य्यमित्याह कल्पनातइति। कल्पनातः अभिलाषात् वा सत्वरम् अथवा असत्वरं न उद्वहेः। अत्र दारकर्म्मणि प्रकृतिः जनभेदात् शरीरस्य मनसः उपयुक्ततां दिशतु।

६। न केवलं वयसोपयुक्तत्वमित्याह न वयइति। न केवलं वयः देशभेदः वा, स्वास्थ्य, धनावस्था, चरित्रम् अपि उत कालनिर्णये सम्मिलेयुः।

७। मनोनयननियममाहेन्द्रियप्रेरणामिति। इन्द्रियप्रेरणाम् अत्र

अविचारणमौत्सुक्यं विवाहे विपदां खलु।
हेतुरवहिताः सन्तु तरुण्यस्तरुणाः सदा ॥ ८ ॥
कृतार्थतायाः प्रतिभूः सुखस्य च विपश्चिमा।
तेषां विचारणा यत्र तयोः सम्मिलितेच्छया ॥ ९ ॥
नयेतां मनसा वोभावनुमोदेत तैः पुनः।
उभाभ्यामनुमोदेत नयेयुर्मनसा च ते ॥ १० ॥
प्राग्विवाहात् परिचयं साक्षात्कारेण चैतयोः।
घनिष्ठमथ नैकट्यवर्द्धकं कुरुतां भवेत् ॥
विश्वस्तत्वे च बन्धुत्वे यावत् परिणतो न सः ॥ ११ ॥

सांसारिकीं स्पृहां न स पुनः अनुसरेत्, तु किन्तु अत्र उद्वाहे स्वस्य श्रेष्ठां विचारणां पित्रोः रक्षकाणाञ्च सुपक्वां शुभां मन्त्रणाम् अनुसरेत्।

८। तत्र स्वेच्छाचरणे दोषमाह अविचारणमिति। विवाहे अविचारणम् औत्सुक्यं खलु विपदां हेतुः, तरुण्यः तरुणाः सदा अवहिताः सन्तु।

९। कथं कृतार्थता सुखञ्च तदाह कृतार्थताया इति। यत्र तयोः तरुणीतरुणयोः इच्छया तेषां पितृमातृरक्षकाणाञ्च विपश्चिमा विचारणा सम्मिलिता तत्र कृतार्थतायाः सुखस्य च प्रतिभूः।

१०। मनोनयनमाह नयेतामिति। उभौ तरुणीतरुणौ मनसा नयेतां परस्परमिति शेषः, तैः पितृमातृरक्षकैः पुनः अनुमोदेत तन्मनोनयनमिति शेषः, ते पितृमातृरक्षकाः वा मनसा नयेयुः उभाभ्यां तरुणीतरुणाभ्याम् अनुमोदेत।

११। प्रागिति। विवाहात् प्राक् उभौ एतयोः परिचयं साक्षात्कारेण घनिष्ठम् अथ नैकट्यवर्द्धकं कुरुताम् यावत् सः परिचयः विश्वस्तत्वे बन्धुत्वे च परिणतः न भवेत्।

बन्धूनां रक्षकाणां वा सन्निधौ स भवेत् पुनः ।
तं जातु नानुमन्येरन्नयथोचितमत्र तु ॥ १२ ॥
सन्ति तत्र चरित्रं ये घातयन्तो हि गोपितुम् ।
जगुप्सिततमस्त्वेनो विवहन्ते परस्परम् ॥
मन्वानास्तेन पापञ्च प्रच्छदयेयुस्त्रपामिति ॥ १३ ॥
अपवित्रः सचोद्वाहः सामाजिकविपत्करः ।
यत्र स्याद्गर्भसञ्चारः प्रागकीर्त्तिरहो भयम् ॥ १४ ॥
विनष्टनीतिकाः शोधयितुं चेज्जीवनानि ते ।
इच्छन्ति चानुतापञ्च सरलं दर्शयन्ति च ॥
विवहेयुः पतितानामुद्धारेणोद्यमेन तु ।
समाजस्योपकारः स्यादसंशयमहो पुनः ॥
पावित्र्यं परमेशस्य रहस्य जातुचिन्न तु ।
अणुमात्रेण हीयेतोत्सृज्येत ह्यपवित्रता ॥
यत्तद्विधा विशुद्धेषु मा विमृदवधानवान् ॥ १५ ॥

१२। बन्धूनामिति। बन्धूनां रक्षकाणां वा सन्निधौ सः परिचयः पुनः भवेत्। अत्र तु जातु कदाचित् अयथोचितं तं परिचयं न अनुमन्येरन् रक्षका इति शेषः।

१३। सन्तीति। तत्र तं सन्ति ये चरित्रं घातयन्तः जुगुप्सिततमम् एनः च गोपितुं तेन विवाहेन पापं त्रपां च प्रच्छदेयुः इति मन्वानाः परस्परं विवहन्ति।

१४। अपवित्र इति। स च उद्वाहः अपवित्रः सामाजिकविपत्करः, यत्र प्राक् विवाहादिति शेषः गर्भसञ्चारः स्यात् अहो अकीर्त्तिः, भयं भयहेतुः।

१५। विनष्टेति। विनष्टनीतिकाः ते चेत यदि इह जीवनानि

नरनार्य्योर्न पत्नी स्यात् पतिर्वैकाधिकः क्वचित् ॥ १६ ॥
मण्डली बहुभर्त्तृत्वं बहुपत्नीत्वमेषु च ।
निषेधति न वन्ध्यत्वं चिररोगित्वमप्युत ॥
व्यभिचारित्वमेकत्वनियमस्य विलङ्घने ।
विवाहे न्याय्यमित्यत्र छलं मन्येत जातुचित् ॥ १७ ॥
अन्योऽन्यं न त्यजेयुर्न विवहेयुर्विवाहिताः ॥ १८ ॥
क्रौर्य्यस्य व्यभिचारस्य तथानभिमतस्य च ।
हेतोस्त्यागोऽनुमोद्येत नान्योऽन्यस्य तु जातुचित् ॥ १९ ॥
वान्धवैरनुमोद्येत चेद्विचारालयैः पुनः ।
पार्थिवैः स सुयोगाय सुखाय चैहिकाय तु ।
न पुनर्दिव्यमादेशमपघ्नन्ति प्रभोर्हि ते ॥ २० ॥

शोधयितुम् इच्छन्ति सरलम् अनुतापं च दर्शयन्ति, विवहेयुः। अस्मायम् ईदृशेन पतितानामुद्धारेण तु समाजस्य उपकारः स्यात्। अहो पुनः यत् परमेशस्य गृहस्य पावित्र्यं जातुचित् न अणुमात्रेण हीयेत, उत्सृज्येत, विशुद्धिषु तद्विधा हि अपवित्रता मा विशत् तत्र अवधानवान् भवेति शेषः।

१६। एकपतिकत्वैकपत्नीकत्वे आह नरनार्य्योरिति। नरनार्य्योः पत्नी पतिः वा क्वचित् एकाधिकः न स्यात्।

१७। मण्डलीति। मण्डली बहुभर्त्तृत्वम् एषु नरेषु च बहुपत्नीत्व निषेधति। वन्ध्यत्वं चिररोगित्वं व्यभिचारित्वम् अपुत्रत अत्र विवाहे एकत्वनियमस्य विलङ्घने न्याय्यं छलम् इति जातुचित् न मन्येत।

१८। नात्र त्यागो विद्यत इत्याह अन्योऽन्यमिति। विवाहिताः अन्योऽन्यं न त्यजेयुः, न विवहेयुः।

१९। व्यभिचारस्येति। क्रौर्य्यस्य नैष्ठुर्य्यस्य व्यभिचारस्य अनभिमतस्य च हेतोः अन्योऽन्यस्य त्यागः न तु जातुचित् अनुमोद्येत।

२०। वान्धवैरिति। स त्यागः चेत् यदि वान्धवैः पार्थिवैः विचा-

ईश्वरस्य विधिः पुण्यं विवाहबन्धनं पुनः ।
उदीरयति न च्छेद्यं जातु केनापि हेतुना ॥ २१ ॥
बद्धो ग्रन्थिर्हि प्रभुणा मा च्छैत्सीत् पार्थिवः करः ॥ २२ ॥
सिद्धस्त्यागो विमुक्ताश्च कर्त्तव्यशृङ्खलादिह ।
* विवाहस्येति मन्वानाः कल्पनातः पुनर्यदि ॥
विवहन्ति च मोदिन्या भ्रान्त्या तद्विषया प्रभोः ।
सिंहासनाग्रे ते हि स्युर्बहुदारत्वदोषतः ॥
सापराधा अहो शोच्या विवहन्ति च ये पुनः ।
तानवैधविवाहेन योजयन्ति परस्परम् ॥ २३ ॥
तेषां धर्म्ममतेऽनैक्यं भिन्नतापि भवेद्यदि ।
नरनार्य्योर्न तद्धेतोश्छिन्द्युरुद्वाहबन्धनम् ॥ २४ ॥

रालयैः पुनः अनुमोदित, सुयोगाय ऐहिकाय सुखाय च । न तु ते पुनः प्रभोः दिव्यं स्वर्गीयम् आदेशम् अपेक्षन्ते ।

२१ । ईश्वरस्येति । ईश्वरस्य विधिः पुनः विवाहबन्धनं पुण्यं पवित्रम् उदीरयति । जातु कदाचित् केनापि हेतुना न छेद्यम् तदिति शेषः ।

२२ । बद्ध इति । प्रभुणा ग्रन्थिः हि बद्धः, पार्थिवः करः मा छैत्सीत् तमिति शेषः ।

२३ । ईश्वरस्येति । त्यागः सिद्धः, इह विवाहस्य कर्त्तव्यशृङ्खलात् विमुक्ताः च इति कल्पनातः मन्वानाः यदि पुनः तद्विषया मोदिन्या भ्रान्त्या विवहन्ति, ते प्रभोः सिंहासनाग्रे बहुदारत्वदोषतः सापराधाः स्युः अहो ते शोच्याः, ये विवहन्ति ये च पुनः तान् परस्परम् अवैधविवाहेन योजयन्ति ।

२४ । तेषामिति । तेषां नरनारीणां यदि धर्म्ममते अनैक्यं भिन्नतापि भवेत्, तद्धेतोः नरनार्य्योः उद्वाहबन्धनं न छिन्द्युः ।

एकधर्म्मावलम्बी चेत् पतिः पत्नी च प्राक् तयोः ।
एकः स्वीकृतवान् धर्म्मान्तरमन्यस्ततो यदि ॥
अस्वीकरोति तेनात्र योगं वोभौ कियद्दिनम् ।
तमूर्थ्यकुरुतां पश्चात् सम्प्रदायान्तरं पुनः ॥
त्यक्तैकस्तत्र गृह्णाति न तच्छलमहो भवेत् ।
विवाहेऽन्यतरस्यात्र कुर्व्वीतात्मार्पणस्य च ।
विश्वासस्य च दृष्टान्तं स्वं दान्तेन हि चेतसा ॥ २५ ॥
मतभेदः स्वभावो वा नीति दौर्ब्बल्यमेव वा ।
सामयिकन्तु चेद्भेदविवादकारणं भवेत् ॥
सम्मेलनाय यत्नः स्याच्छोधनाय च सर्व्वथा ।
यावज्जीवं जातु वैवाहिके सम्बन्धबाध्यते ॥
नास्वीकार्य्यं भजेयातां श्लथबन्धत्वमत्र न ॥ २६ ॥

२५। एकधर्म्मेति। चेत् यदि प्राक् पतिः एकधर्म्मावलम्बी पत्नी च एकधर्म्मावलम्बिनी, तयोः एकः धर्म्मान्तरं स्वीकृतवान्, ततः अन्यः यदि तेन धर्म्मान्तरग्रहीत्रा अत्र धर्म्मान्तरे योगम् अस्वीकरोति, अथवा उभौ कियद्दिनं तं धर्म्मम् ऊर्थ्यकुरुतां, पश्चात् एकः तं च त्यक्त्वा सम्प्रदायान्तरं गृह्णाति अत्र अन्यतरस्य विवाहे अहो न छलं भवेत्, दान्तेन चेतसा स्वम् आत्मानम् आत्मार्पणस्य च विश्वासस्य च दृष्टान्तं कुर्व्वीत।

२६। विवाहबन्धनस्य नित्यत्वमाह मतभेद इति। मतभेदः, स्वभावः, सामयिकं नीतिदौर्ब्बल्यम् एव वा चेत् यदि भेदस्य विवादस्य वा कारणं भवेत् यावज्जीवं सम्मेलनाय शोधनाय च सर्व्वथा यत्नः स्यात्, जातु कदाचित् वैवाहिके सम्बन्धबाध्यते, न अस्वीकार्य्यं, न अत्र श्लथबन्धत्वं भजेयाताम्।

मानव्यो मानवास्तस्मात् स्मरन्तु यद्विवाहिताः ।
एकदा चेच्चिरायातस्त्यागो नास्तीश्वरालये ॥ २७ ॥
अतिनात्ययसमये मृता पत्नी पतिर्मृतः ।
चेज्जीवितो जीविता वा विवहेत्तौ यदोत्सुकः ॥
तयोर्वृत्तौ तथाभूते साधु चेन्न विचिन्तति ।
उद्वाहाय जीवनं समर्प्येशाय बलिं चिरम् ॥ २८ ॥
नैकट्याद्दविवाह्यत्वं देशाचारानुसारतः ।
रक्षणीयं न विवहेदेकशोणितमङ्गनम् ॥ २९ ॥
न तु निकटसम्पर्कां नारीं जातूद्वहेन्नरः ।
मर्म्माविद्निसर्गत्वाद्नीतेः क्षतिकृत्तया ॥ ३० ॥
मातृतः पितृतो वाथ चतुःपुरुषमध्यगौ ।
भ्राता वा भगिनी वाथैकतरः पूर्व्वजस्य तु ॥
पूर्व्वजो वा यदि स्यान्न तयोरुद्वाहबन्धनम् ॥ ३१ ॥

२७। मानव्य इति। तस्मात् मानव्यः मानवाः स्मरन्तु यत् चेत् यदि एकदा विवाहिताः, चिराय विवाहिता इति शेषः। अतः ईश्वरालये त्यागः नास्ति।

२८। अतीति। अतितात्यय समये चेत् यदि पत्नी मृता पतिः मृतः, जीविता जीवितः वा विवहेत् यदि तौ उत्सुकः। तयोर्वृत्तौ तथाभूते मृतपत्नीकत्वे मृतपतिकत्वे चेत् ईशाय ईश्वराय जीवनं चिरं बलिम् समर्प्य उद्वाहाय न विचिन्तति साधु तदिति शेषः।

२९। अविवाह्यत्वमाह नैकट्यादिति। देशाचारानुसारतः नैकट्यात् अविवाह्यत्वम् रक्षणीयम्, एकशोणितमङ्गनं न विवहेत्।

३०। न त्विति। मर्म्माविद्निसर्गत्वात् मर्म्मपीड़ाकरस्वाभाविकत्वात् अनीतेः नीतिविरुद्धत्वात् क्षतिकृत्तया न तु निकटसम्पर्कां नारीं जातु कदाचित् नरः उद्वहेत्।

३१। मातृत इति। मातृतः अथवा पितृतः चतुःपुरुषमध्यगौ

उभयोः सम्मतैरर्व्वाङ् मनोनीतैश्च रक्षकाः।
उपायनैर्लिपिबन्धैर्द्दढ़येयुरथापरैः॥ ३२॥
विवाहसमयो दूरवर्त्ती चेत्तन्निबन्धनम्।
द्रढ़ीकर्त्तुं युक्ततममसाधारणलक्षणम्॥
विधातृराज्यविस्तारहेतुर्जातिविमेलकम्।
आश्रीयेत मेलनं चेत् वाग्दानस्य विधिस्ततः॥
प्राग्विवाह्यवयःप्राप्तेरपीश्वरस्य सन्निधौ।
साक्षिणान्तथान: कुर्य्युरलङ्ग्य शुद्धिमत्तमम्॥ ३३॥
वाग्दानविधिरेष स्यादुद्वाहस्य निबन्धनम्।
धर्मतोऽत्र तयोः किन्तु दम्पत्योर्नानुमोदनम्॥
सहवासस्य यावन्न वयसोद्वाहपूर्णता॥ ३४॥

नारी नरः च, अथवा तयोः एकतरः पूर्व्वजस्य तु भ्राता वा भगिनी वा पूर्व्वजो वा यदि, तयोः उद्वाहबन्धनं न स्यात्।

३२। सम्बन्धनिबन्धनमाह उभयोरिति। उभयोः तयोः नरनार्य्योः सम्मतैः मनोनीतैः च अर्व्वाक् रक्षकाः उपायनैः उपढौकनैः लिपिबन्धैः अपरैः उपायैः द्रढ़येयुः तन्निबन्धनमिति शेषः।

३३। विवाहेति। चेत् यदि विवाहसमयो दूरवर्त्ती, तत् निबन्धनं चेत् द्रढ़ीकर्त्तुं युक्ततमम्, चेत् मेलनम् असाधारणलक्षणं, विधातुः राज्यविस्तारहेतुः, जातिविमेलकं जातिद्वयोर्मिलनसाधकम्, विवाह्य-वयःप्राप्तेः अपि प्राक् ततः वाग्दानस्य विधिः आश्रीयेत, यतः तत् मेलनम् ईश्वरस्य साक्षिणां सन्निधौ अलङ्घ्यं शुद्धिमत्तमं कुर्य्युः।

३४। वाग्दानेति। एषः वाग्दानविधिः अत्र धर्मतः उद्वाहः निबन्धनं च, किन्तु यावत् वयसा न उद्वाहपूर्णता, न तावत् तयोः दम्पत्योः सहवासस्य अनुमोदनम्।

अभ्यञ्जनक्रिया जातिव्यवहारानुस. ।
प्राग्विवाहदिवसस्य सप्ताहात् सा भवेदिह ॥ ३५ ॥
विविधैः सुरभिद्रव्यैस्तैलेन च सुगन्धिना ।
स्नापयेद्वरं कन्यान्तत्तदावसथे पुनः ॥
अभिषिञ्चेज्जलेनाथ बन्धुस्वजनसञ्चयः ।
पुष्पाणि विकिरेत् मङ्गलध्वनिं कुर्य्युर्वरस्त्रियः ॥
स्नापयन्त्यस्तयोस्त्या आशिषा शुभकाङ्क्षितैः ॥ ३६ ॥
ततः प्रभृति वातोद्यघोषश्च भोजनोत्सवः ।
आमोदाह्लादसन्दोहविकाशः स्यात्तयोर्गृहे ॥ ३७ ॥
विवाहदिवसे पुष्पवस्त्रादिपरिशोभितम् ।
दीपाधारैर्ध्वजैः सम्भावितं कन्यागृहं भवेत् ॥
विशेषतः प्राङ्गणान्तत् स्थानं वान्य तदर्थकम् ॥ ३८ ॥

३५। विवाहानुष्ठानमितः प्रभृत्यारभ्यते अभ्यञ्जनेति। जाति-व्यवहारानुसारतः विवाहदिवसस्य सप्ताहात् प्राक् सा अभ्यञ्जनक्रिया इह भवेत्।

३६। विविधैरिति। बन्धुस्वजनसञ्चयः बन्धुस्वजनसमूहः वरं कन्यां तत्तदावसथे विविधैः सुरभिद्रव्यैः सुगन्धिना तैलेन च स्नापयेत्, अथ जलेन अभिषिञ्चेत्, पुष्पाणि विकिरेत्। तयोः वरस्त्रियः आशिषा शुभकाङ्क्षितैः सम्भावयन्त्यः मङ्गलध्वनिं कुर्य्युः।

३७। ततइति। तयोः वरकन्ययोः गृहे ततः प्रभृति च वातोद्य-घोषः भोजनोत्सवः आमोदाह्लादसन्दोहविकाशः च स्यात्।

३८। विवाहेति। विवाहदिवसे कन्यागृहं पुष्पवस्त्रादिपरिशोभितं दीपाधारैः ध्वजैः सम्भावितं भवेत्। विशेषतः तदर्थकं विवाहार्थनिर्दिष्टं तत् प्राङ्गणम् अन्यं वा स्थानं तैः सम्भावितं भवेदिति शेषः।

बन्धुभिः स्वजनैः सार्द्धं कुर्य्यात् सांयात्रिकं पुनः।
विभूष्येमं चोपवेश्य याने समुचिते वरम् ॥
कन्यागृहे नयेयुस्ते वादित्रालोकसङ्कुलाः ॥ ३९ ॥
पिता वा रक्षको ज्येष्ठो वरपक्षे उपस्थिते।
स्वागतं द्वारि कुर्य्युस्ते नयेयुस्तं वरं मुदा ॥
स्थाने चोपवेशयेयुर्विचित्रोच्चासने शुभे ॥ ४० ॥
उपविष्टेषु सर्व्वेषु कन्याकर्त्ता समुत्थितः।
उपासनान्ते सम्मानेनातियोग्येन प्रार्थयेत् ॥
कर्त्तव्येऽस्मिन् शुभे कन्यादानकर्म्मणि सम्प्रति।
भवन्तश्चानुमन्यन्तां स्वस्तीति वाचयन्तु च ॥ ४१ ॥
ते सर्व्वे युगपद् ब्रूयुः स्वस्तीति ध्वनितो मुदा ॥ ४२ ॥
सम्मुखीनं वरं कन्याकर्त्ताचार्य्यसन्निधौ।

३९। बन्धुभिरिति। सार्द्धं पुनः स्वजनैः बन्धुभिः सांयात्रिकं कुर्य्यात्। इमं वरं विभूष्य समुचिते याने च उपवेश्य वादित्रालोकसङ्कुलाः ते स्वजनाः बन्धवः च कन्यागृहे नयेयुः।

४०। पितेति। वरपक्षे हि उपस्थिते पिता रक्षकः ज्येष्ठः वा द्वारि स्वागतं कुर्य्युः, मुदा तं वरं स्थाने निर्द्दिष्टे नयेयुः शुभे विचित्रोच्चासने च उपवेशयेयुः।

४१। पद्धतिरारभ्यते उपविष्टेष्विति। सर्व्वेषु उपविष्टेषु उपासनान्ते कन्याकर्त्ता समुत्थितः अतियोग्येन सम्मानेन प्रार्थयेत्। किं प्रार्थयेत्? कर्त्तव्येऽस्मिन् शुभे कन्यादानकर्म्मणि भवन्तोऽनुमन्यन्तां स्वस्तीति च वाचयन्तु।

४२। त इति। ते सर्व्वे मुदा ध्वनितः सुस्पष्टवाचा युगपत् ब्रूयुः—'स्वस्ति'—इति।

वेदीसम्मुखभागे तु नयेत् तत्रासने शुभे ॥
निर्व्वर्त्तयेत् वक्ष्यमाणविधिना वरणं ततः ॥ ४३ ॥
कन्याकर्त्तरि पुष्पैश्च गन्धद्रव्यैश्च भाजनम् ।
गृहीत्वार्घ्यं प्रतिगृह्यतामित्युक्ते वरं पुनः ॥
ओमर्घ्यं प्रतिगृह्णामीत्युरीकुर्य्यात् प्रतिग्रहे ।
एवं परिच्छदे चाङ्गुरीयके च समर्पिते ॥ ४४ ॥
ततो वरे प्रस्थिते च वसिते च परिच्छदे ।
तस्मिन् सज्जागृहे चान्तःपुरे ततो नयेत् पुनः ॥
तमुक्तविधिना कन्याकर्त्री च महिलाजनैः ।
वृणुयात्तं वरं सम्मानयेदेवं समाहिता ॥ ४५ ॥
परिच्छदैरलङ्कारैः सुष्ठु भूषितया सह ।

४३। सम्मुखीनमिति। कन्याकर्त्ता: सम्मुखीनं वरम् आचार्य्यसन्निधौ वेदीसम्मुखभागे तु तत्र शुभे आसने नयेत्। ततः वक्ष्यमाणविधिना वरणं निर्वर्त्तयेत्।

४४। कन्याकर्त्तरीति। पुष्पैश्च गन्धद्रव्यैश्च भाजनं गृहीत्वा—'अर्घ्यं प्रतिगृह्यताम्'—इति कन्याकर्त्तरि उक्ते वरः पुनः प्रतिग्रहे—'ओम् अर्घ्यं प्रतिगृह्णामि'—इति उरीकुर्य्यात्। एवं परिच्छदे अङ्गुरीयके च समर्पिते, तद्यथा—कन्याकर्त्ता—'एष परिच्छदः प्रतिगृह्यताम्'। वरः—'एषोऽहं परिच्छदं प्रतिगृह्णामि'। कन्याकर्त्ता—'इदमङ्गुरीयकं प्रतिगृह्यताम्'। वरः—'एषोऽहमङ्गुरीयकं प्रतिगृह्णामि।'

४५। तत इति। ततः तदनन्तरं तस्मिन् सज्जागृहे प्रस्थिते च ततः सज्जागृहात् अन्तःपुरे च तं पुनः नयेत्। तं वरम् उक्तविधिना कन्याकर्त्री च महिलाजनैः सह समाहिता वृणुयात् एवं सम्मानयेत्।

कन्यया स वरो वेदीसम्मुखे तु परस्परम् ।
सम्मुखीनेन भावेन विशेत् स्वासनं तदा ॥ ४६ ॥
स आचार्य्यस्ततः पृच्छेत् वरं कन्याञ्च सम्मतिम् ।
श्रीमन्नमुक एतां श्रीमतीं सङ्कल्पवान् किमु ॥
पत्नीत्वेन ग्रहीतुं भोः, श्रीमत्यमुकि किंचिमम् ।
पतित्वेनामुकं श्रीमन्तङ्गृहीतुं त्वमिच्छसि ॥
ओमितीह तयोः प्रत्युक्तयोर्भारार्पणं भवेत् ॥ ४७ ॥
शाकादिकं पितृपितामहनामान्युदीरयन् ।
वरस्य कन्याकर्त्ता स साक्षात्कारे परस्य च ॥
भारं समर्पयेत् सोऽपि वरो नामान्युदीरयन् ।
पितृपितामहानाञ्च कन्यायाः परमेष्ठितुः ।
स्वीकुर्य्यात् सन्निधौ भारग्रहणं स्वस्ति वाचयेत् ॥
न धर्म्मेण न चार्थेन न भोगेन कदाचन ।
त्वयेयमतिनरितव्येत्युक्ते स वरः पुनः ॥
न जात्वभिचरिष्यामीमामित्युक्तिमुदीरयेत् ।
दक्षिणान्तेन विधिना मानयेत् स पिता वरम् ॥ ४८ ॥

४६ । परिच्छदैरिति । परिच्छदैः अलङ्कारैः सुष्ठु भूषितया कन्यया सह स वरः वेदीसम्मुखीनेन भावेन स्वासनं तदा विशेत् ।

४७ । सइति । ततः स आचार्य्यः वरं कन्यां च सम्मतिं पृच्छेत् ।— 'श्रीमन्नमुक, किन्त्वमेतां श्रीमतीममुकीं पत्नीत्वेन ग्रहीतुं कृतसङ्कल्पः ? श्रीमत्यमुकि, किन्त्वमिमं श्रीमन्तममुकं पतित्वेन ग्रहीतुं कृतसङ्कल्पा ? ओमितीह तयोः प्रत्युक्तयोः—वरः—'ओम्' कन्या—'ओम्'—भारार्पणं भवेत् ।—

४८ । शाकादिकमिति । स कन्याकर्त्ता शाकादिकं वरस्य पितृपितामहनामानि च उदीरयन् परस्य परमेश्वरस्य च साक्षात्कारे भारं समर्पयेत् । तद्यथा—कन्याकर्त्ता—अद्य अमुके शाके अमुके मासि अमुकस्यां तिथौ

कन्यायाः दक्षिणं हस्तं वरो दक्षकरेण च ।
आदद्यात् पुष्पमाल्येन बध्येयातां पुरोधसा ॥
प्रीतिग्रन्थितया तौ च करौ तत्र वरस्ततः ।
कन्या चैवं प्रतिजानीयातामीश्वरसन्निधौ ॥
साक्षित्वेन परेशस्य श्रीमतीममुकीं स्वहम् ।
त्वां पत्नीत्वेन वैधेन स्वीकरोम्यद्य सत्कृताम् ॥
साक्षित्वेन परेशस्य श्रीमन्तममुकं स्वहम् ।
त्वां पतित्वेन वैधेन स्वीकरोम्यद्य सत्कृतम् ॥
उभे उदीरयेतां तौ मन्त्रानेतान् पृथक् पृथक् ।
सम्पदि विपदि च दुःखे सुखे च सुस्थले विपरीते ।
कल्याणं तव नित्यं महता यत्नेन वर्द्धयामि ॥
यदेतत् हृदयं मम तदस्तु हृदयं तव ।
यदेतत् हृदयं तव तदस्तु हृदयं मम ॥
यएते हृदये नौ स्तामुभयोरीश्वरस्य ते ॥

सर्व्वसाक्षिणः परमेश्वरस्य पवित्रसन्निधावसुख्याः सालङ्कारायाः सपरिच्छदायाः प्रियतमायाः कन्यायाः श्रीमत्या अमुक्या भारम् अमुकस्य प्रपौत्राय अमुकस्य पौत्राय अमुकस्य पुत्राय श्रीमते अमुकाय तुभ्यं समर्पयामि। वरः—अमुकस्य प्रपौत्र्याः अमुकस्य पौत्र्याः अमुकस्य पुत्र्याः श्रीमत्या अमुक्या भारं स्वीकरोमि। स्वस्ति।

न धर्म्मगति। कन्या कर्त्ता—धर्म्मेण अथवा भोगेन नातिचरितव्या त्वयेयम्। वरः—नातिचरिष्यामि। स पिता कन्याकर्त्ता दक्षिणान्तेन विधिना वरं मानयेत्। तद्यथा—अद्य अमुके मासि अमुके पक्षे अमुके दिवसे अमुक्यां तिथौ एतच्छुभकन्याभारसम्प्रदानकर्म्मणः साङ्गतार्थं दक्षिणास्वरूपसुपरिमितदानीयवस्तुजातं श्रीअमुकाय वराय ब्रह्मनिष्ठब्राह्मणाय तुभ्यमहं सम्प्रददे। वरः—स्वस्ति।

वरः—सखी भव त्वं ननु ते भवामि
सखा, प्रभिद्येत न सख्यमावयोः।
कन्या—सखा भव त्वं ननु ते भवामि
सखी, प्रभिद्येत न सख्यमावयोः।
प्रार्थना—रक्षणेऽस्याः प्रतिज्ञायाः सहायोभव मे प्रभो ॥४८॥
ततोऽनुशिष्याद्दाचार्य्य एवं तौ दम्पती तदा।
करुणामयदेवस्य प्रसादाद्दद्य तस्य च।
पवित्रसन्निधौ बद्धावुद्वाहश्रृङ्खलेन तु ॥
स्वस्यैवोन्नतिमाधाय स्वान्ते जीवनवर्त्मनि।
एकाकिनौ व्यचरतमद्यावध्यधुना पुनः ॥
वैवाहिको गुरुर्भारो न्यस्तोऽस्मिन् युवयोः करे।
सोपाने प्रथमे पादं न्यस्यथोद्धाद्य सङ्कुले ॥

४६। कन्याया इति। वरः कन्यायाः दक्षिणं हस्तं दक्षकरेण च दक्षिणहस्तेन आदद्यात्। पुरोधसा पुरोहितेन प्रीतिग्रन्थितया तौ च करौ ततः पुष्पमालेन बध्येयाताम्। ततो वरः कन्या च एवम् ईश्वर सन्निधौ प्रतिजानीयाताम्। वरः—पवित्रपरमेश्वरस्य साक्षित्वेन श्रीमतीमसुकीं त्वामहम् अद्य वैधपत्नीत्वेन स्वीकरोमि। कन्या—पवित्रपरमेश्वरस्य साक्षित्वेन श्रीमन्तमसुकन्त्वामहमद्य वैधपतित्वेन स्वीकरोमि। उभे तौ एतान् मन्त्रान् पृथक् पृथक् उदीरयेताम्। वरः—सम्पदि विपदि, सुखे दुःखे, सुस्थतायामसुस्थतायाञ्च तव मङ्गलसाधने यत्नवानस्मि। कन्या—सम्पदि विपदि, सुखे दुःखे, सुस्थतायामसुस्थतायाञ्च तव मङ्गलसाधने यत्नवत्यस्मि। वरः—यदेतत् हृदयमित्यादि। कन्या—यदेतत् हृदयमित्यादि। वरः—सखी भव त्वमित्यादि। कन्या—सखा भव त्वमित्यादि। प्रार्थना—वरः—हे परमेश्वर अद्य उद्वाहप्रतिज्ञायाः परिपालने त्वं मम सहायो भव। कन्या च—तथा।

पार्थिवस्य जीवनस्य क्षिपेयाथां पदानि च।
अवधानेनावहितौ भवेतं यत् कदाचन॥
पार्थिवमोहजालेन माभूतमावृताविह।
ऐहिकं सुखभोगञ्च लब्ध्वा सौभाग्यसम्पदम्॥
मा विस्मार्ष्टन्तु दातारं रचन्तौ निर्भरं सदा।
सत्यस्वरूपे चानेनाऽनन्तकल्याणसुखसम्पदाम्॥
वर्द्धने प्रयतेयाथां सर्व्वस्मिन् गृहकर्म्मणि।
स्मरतं ब्राह्मधर्म्मस्य चुपदेशमिमं शुभम्॥
"ब्रह्मनिष्ठो गृहस्थः स्यात्तत्त्वज्ञानपरायणः।
यद्यत् कर्म्म प्रकुर्व्वीत तद्ब्रह्मणि समर्पयेत्॥"
सर्व्वमर्पयतं तस्मै युवयोरीश्वराय हि।
सर्व्वस्मान्नियतं रक्षेत् स युवामशिवात् स्वयम्॥
कुरुतं निलयं नित्यं युवयोस्तद्गृहं तथा।
सुखं नवविधानस्य मन्दिरं पावनं महत्॥ ५०॥

५०। ततः आचार्य्यः एवं तौ दम्पती तदा अनुशिष्यात्।—अद्य करुणामयदेवस्य प्रसादात् तस्य च पवित्रसन्निधौ युवासुद्वाहसूत्रेणाबद्धौ। अद्यावधि स्वस्यैवोन्नतिं मनस्याधाय एकाकिनौ जीवनवर्त्मनि व्यचरतम्। अधुना युवयोः करेऽस्मिन् गुरुर्वैवाहिको भारोन्यस्तः। अद्य पार्थिवजीवनस्य प्रथमसोपाने पादं न्यस्यथः। अवधानेन पदानि क्षिपेयाथाम्। अवहितौ भवेतं यत् कदाचन पार्थिवमोहजालेनावृतौ मा भूतम्। ऐहिकं सुखभोगं सौभाग्यसम्पदं च लब्ध्वा मा दातारं विस्मार्ष्टम्। सत्यस्वरूपे निर्भरं रचन्तौ सदानन्तोऽनन्तकल्याणसुखसम्पदो वर्द्धने प्रयतेयाथाम्। सर्व्वस्मिन् गृहकर्म्मणि ब्राह्मधर्म्मस्येमं शुभमुपदेशं स्मरतम्। "ब्रह्मनिष्ठो गृहस्थः स्यात्तत्त्वज्ञानपरायणः। यद्यत् कर्म्म

श्रीमंस्त्वं नियतं पत्न्या मङ्गलस्य विवर्द्धने ।
विनियुक्तो भव न्यस्तो हस्ते ते प्रभुणा स्वयम् ॥
संसारस्य तु भारोऽयमद्य गुरुतरः खलु ।
निर्वर्त्तय वशीकृत्य प्रवृत्तीरसतीस्तव ॥
पुण्यं कृत्यचयं नित्यं समभावं दशासु च ।
विविधासु च रक्ष त्वं जीवनस्य यथा तव ॥
स्वस्यात्मनो मङ्गलस्य वर्द्धने यत्नवांस्तथा ।
पत्नीं वर्त्मनि पुण्ये च नेतुं सत्यस्य तां भव ॥
गृहकृत्येषु तां नित्यं कल्याणकृत्सु संरताम् ।
संरक्ष शिक्षया दृष्टान्तेन यत् सा चरेच्चिरम् ॥
सखीव नियतं सत्यसुखवर्त्मनि ते ध्रुवम् ॥ ५१ ॥
कर्म्मणा मनसा वाचा श्रीमत्यमुकि नित्यदा ।
अनुतिष्ठात्र तत् कर्म्म यत् स्यात् पतिहिताय ते ॥

प्रकुर्व्वीत तद्दृष्टि समर्पयेत्। सर्व्वं हि युवयोः तस्मा ईश्वराय समर्पयतम्। स स्वयं युवां सर्व्वस्मादमङ्गलात् नित्यं रक्षेत्। युवयोर्निलयं तस्येश्वरस्य गृहं, तथा महत् सुखं नवविधानस्य पावनं मन्दिरं कुरुतम्।

५१। श्रीमन्निति। श्रीमन्नमुक, त्वं पत्न्या मङ्गलवर्द्धने नियुक्तो भव, तव हस्ते ऽस्य स्वयं प्रभुणा संसारस्य गुरुतरोऽयं भारो न्यस्तः। तवासतीः प्रवृत्तीर्वशीकृत्य नित्यं पुण्यकृत्यचयं निवर्त्तय। जीवनस्य विविधासु च दशासु त्वं समभावं रक्ष। यथा तव स्वस्यात्मनो मङ्गलवर्द्धने, तथा पुण्ये सत्यस्य वर्त्मनि पत्नीं नेतुं यत्नवान् भव। शिक्षया दृष्टान्तेन नित्यं तां कल्याणकृत्सु गृहकर्म्मसु संरतां रक्ष यत् सा सत्यसुखवर्त्मनि चिरं ते सखीव चरेत्।

एकान्तमनसा तस्योपरि स्थापय निर्भरम् ।
हितार्थं ते यदेवार्य्य दिशत्यत्रानुतिष्ठ तत् ॥
पत्ये भक्तिमती स्यास्त्वं साधुकर्म्मणि सोद्यमा ।
विवादो वाऽमिताचारो माभूत्त्वत्तः कदाचन ॥
चिन्तां वाक्यञ्च कार्य्यञ्च पवित्रं रत्न सन्ततम् ।
नित्यं पतिसहाया स्या नियुक्तात्मोन्नताविह ॥ ५२ ॥
आशीर्व्वचनमेवं स आचार्य्यः समुदीरयेत् ।
शाश्वतस्य च सत्यस्य शान्तेर्भवतु वर्त्मनि ॥
चिरं विचरितुञ्चेशः सहायः करुणालयः ।
दम्पत्योर्भूषयत्वत्र शिवं सत्यञ्च सुन्दरम् ॥
यत् किञ्च तेन सर्व्वेण निलयं सुखिनौ चिरम् ।
मण्डल्यान्तु करोत्वस्य नूतनस्य विधेरिह ॥ ५३ ॥

५२। कर्म्मणेति। श्रीमन्नसुकि, यत् कर्म्म तव पत्युर्हिताय स्यात् कर्म्मणा मनसा वाचा तदनुतिष्ठ। एकान्तमनसा तस्योपरि निर्भरं स्थापय, यदेवार्य्यं तव हितार्थं दिशति तदत्रानुतिष्ठ। पत्यौ च भक्तिमती, साधुकर्म्मणि सोद्यमा स्याः। त्वत्तः कदाचन विवादोऽमिताचारो वा माभूत्। सन्ततं चिन्तां वाक्यं कार्य्यञ्च पवित्रं रत्न, पतिसहाया नित्यमात्मोन्नतौ नियुक्ता स्याः।

५३। आशीर्व्वचनमिति। स आचार्य्यः एवम् आशीर्व्वचनम् उदीरयेत्। ईशः करुणालयः शाश्वतस्य सत्यस्य शान्तेश्च वर्त्मनि नित्यं विचरितुं दम्पत्योः सहायो भवतु, यत् किञ्च सत्यं शिवं सुन्दरञ्च सर्व्वं तेन तयोर्निलयं भूषयतु, अस्य नूतनविधेर्मण्डल्यां तौ चिरं सुखिनौ करोतु।

निर्व्वर्त्तयेदनुष्ठानं सङ्गीतेनोपयोगिना ।
शान्तिः शान्तिः शान्तिरिति समुदीर्य्येत सङ्गतैः ॥ ५४ ॥
यत्रास्ति संशयः सन्ततीनां दायाश्रये ततः ।
साक्षित्रयसमक्षन्तु राजपूरुषसन्निधौ ॥
कुर्य्यातां स्वाक्षरादींश्च तासामधिकृतेरिह ॥ ५५ ॥

इति विवाहकर्म्म ।

---

## अन्त्येष्टिक्रिया ।

माभूल्लघुत्वमौदार्य्यं मृत्युकाले ह्युपस्थिते ॥ १ ॥
अस्माल्लोकाच्चान्तिमं तत् प्रयाणममरात्मनः ।
इत्थं स्यात्सुगम्भीरं प्रास्तुतिकव्यापार एव हि ॥ २ ॥

५४। निर्व्वर्त्तयेदिति। उपयोगिना सङ्गीतेन अनुष्ठानं निर्व्वर्त्तयेत्। उपासनार्थं सङ्गतैः शान्तिः शान्तिः शान्तिः इति समुदीर्य्येत।

५५। यत्रेति। ततः यत्र सन्ततीनां दायाश्रये संशयः अस्ति तत्र साक्षित्रयसमक्षं राजपूरुषसन्निधौ तासां सन्ततीनाम् अधिकृतेः अधिकारार्थम् दायस्येति शेषः स्वाक्षरादीन् च कुर्य्यातां दम्पती।

इति विवाहकर्म्म ।

---

१। अन्त्येष्टिक्रियां वक्तुमाह माभूदिति। मृत्युकाले हि उपस्थिते लघुत्वम् औदार्य्यं वा मा भूत्, तत्कालस्य गाम्भीर्य्यपूर्णत्वात्।

२। अस्मादिति। अस्मात् लोकात् अमरात्मनः अन्तिमं तत् प्रयाणं सुगम्भीरं इत्थं प्रास्तुतिकव्यापारः एव हि स्यात्।

स व्यवस्थापयेद्दायं याता पार्थिवमात्मनः ।
परलोकं विधिपूर्व्वं मिलितेभ्यस्ततः स तु ॥
बन्धुस्वजनदासेभ्यो गृह्णीयाद्यानसम्मतिम् ।
आशिषं चुम्बनं मानं दद्यादन्तिमवाचनम् ॥ ३ ॥
शय्यापार्श्वगतास्तेऽपि ब्रूयुर्वाचस्तथान्तिमाः ।
यच्छेयुश्च यतात्मानः प्रयाणानुमतिं शुभाम् ॥ ४ ॥
ऐहलौकिककर्त्तव्यमेवं सम्पादयन् स तु ।
वाह्येभ्यो विषयेभ्योऽत्र निवृत्यान्तर्विशेत्ततः ॥
कृत्यं प्रास्तुतिकं निर्व्वर्त्तयितुं पारलौकिकम् ॥ ५ ॥
प्रिया निकटसम्बन्धा ज्येष्ठा अध्यात्मवर्त्मनि ।
तत्र गम्भीरनिर्याणे कुर्व्वन्तु स्य सहायताम् ॥ ६ ॥

३ । परलोकगमनोन्मुखस्य कर्त्तव्यमाह सइति । स परलोकं याता आत्मनः पार्थिवं दायं विधिपूर्व्वं व्यवस्थापयेत् । ततः तदनन्तरं स तु मिलितेभ्यः बन्धुस्वजनदासेभ्यः यानसम्मतिं प्रयाणसम्मतिम् गृह्णीयात् । आशिषं चुम्बनं मानम् अन्तिमवाचनं दद्यात् तेभ्यो यथोपयुक्तमिति शेषः ।

४ । मिलितानां कर्त्तव्यमाह शय्येति । शय्यापार्श्वगताः ते अपि तथा अन्तिमाः वाचः ब्रूयुः, यतात्मानः शुभां प्रयाणानुमतिं च यच्छेयुः ।

५ । प्रयातुः परलोकगमनसमुचितकृत्यमाह ऐहलौकिकेति । स प्रयाता तु एवं ऐहलौकिककर्त्तव्यं सम्पादयन् वाह्येभ्यः विषयेभ्यः निवृत्य पारलौकिकं परलोकगमनसम्पर्कीनं प्रास्तुतिकं कृत्यं निर्व्वर्त्तयितुं ततः अन्तः विशेत् ।

६ । अपरेषां कृत्यमाह प्रियाइति । प्रियाः प्रियजनाः निकटसम्बन्धाः स्वजनाः अध्यात्मवर्त्मनि ज्येष्ठाः तत्र गम्भीरनिर्याणे अस्य सहायतां कुर्व्वन्तु ।

प्रार्थनाध्ययनं श्रौतं स्तोत्रं सङ्गीतमेव च।
अन्यत् तत्सममस्मै तैः सम्पाद्यं येन बोधितः॥
विश्वासायानुतापायाप्रायै स्यात् पारलौकिके।
वस्तुत्वेऽसौ पुनर्जाग्रत् तत्र पूर्णप्रमाणतः॥ ७॥
अनन्तजलधेः पारे दण्डायमान इत्यसौ।
तदानुभाव्यतां तूर्णं विश्वासपोतमाश्रयन्॥
दूरवर्त्तिनि निलये यास्यतीति च सम्प्रति॥ ८॥
अनुभवतु कल्याणी माता स्नेहमयी त्वमुम्।
नेतुं तत्रामुना नित्यं विद्यमाना महर्षिभिः।
आहूयमानः सानन्दध्वनिभिश्चेति तत्त्वतः॥ ९॥
अतोऽस्याः संहृतेश्चिन्ता वासनामुं कदाचन।
मा परिभूदार्त्तनादो मा चैषीत् क्रन्दनं पुनः॥
सादृशञ्च तदा सर्व्वा अवस्था मिलितास्तथा।
भवन्तु यत् समावस्था स्यादस्य रचिता द्वयोः॥

७। प्रार्थनेति। प्रार्थना, श्रौतम् अध्ययनं स्तोत्रं सङ्गीतम् एव च तत्-समम् अन्यत् अस्मै प्रयात्रे तैः स्वगणादिभिः सम्पाद्यम्। येन सङ्गीता-दिना विश्वासाय अनुतापाय आप्त्यै बोधितः तत्र पारलौकिके वस्तुत्वे असौ प्रयाता पुनः जाग्रत् स्यात्।

८। अनन्तेति। अनन्तजलधेः पारे दण्डायमानः इति तूर्णं विश्वास-पोतम् आश्रयन् दूरवर्त्तिनि निलये सम्प्रति यास्यति इति च असौ याता तदा तैः अनुभाव्यताम्।

९। अनुभवत्विति। माता कल्याणी स्नेहमयी तु अमुं परलोकप्रस्थितं जनं तत्र परलोके नेतुम् अमुना सह विद्यमाना, महर्षिभिः सानन्द-ध्वनिभिः आहूयमानः इति तत्त्वतः असौ अनुभवतु।

गतिः स्वर्गदिग्या पृथ्वीदिग्या जातु भवेन्न तु।
वचोभिर्मन्त्रवर्णैर्वात्र स बन्धुर्यः सहायकः॥ १०॥
स्वजना बान्धवा यूयं न पिञ्जरगतं पुनः।
रक्षितुं तं खगं जातु यत्नमातिष्ठत स्वतः॥
उद्यतस्य खमुड्डन्तुं सहाया भवतास्य च।
उद्यायाद्यद्विमुक्तः सन् प्रभोर्नाम प्रकीर्त्तयन्॥ ११॥
न किञ्चिन्मृत्युप्रयायामस्त्यत्र मधुरं पुनः।
प्रियान्नाम्नस्ततः सर्व्वे ये तं सम्मानयन्ति च॥
प्रीणयन्ति प्रयाणार्थमुद्यतं कीर्त्तयन्तु च।
नामास्य करुणासिन्धोर्ह्लादयन्त्वस्य तन्मनः॥ १२॥
एवं स प्रस्तुतो दृष्टिं निःक्षिप्य चरमां ततः।

१०। अतइति। अतः अतएव अस्याः संहतेः चिन्तावासना कदाचन अमुं मा परिभूत् पराभूतम् अधीरं मा कार्षीत्, मा आर्त्तनादः क्रन्दनं पुनः साहसं च चोषीत्। तदा सर्व्वाः अवस्थाः तथा मिलिताः भवन्तु यत् अस्य समावस्था रक्षिता स्यात्, इयोः गतिः स्वर्गदिग्या भवेत् न तु जातु पृथ्वीदिग्या। अत्र यः वचोभिः मन्त्रैः वा हर्षवर्द्धकैरिति शेषः सहायकः स बन्धुः।

११। स्वजना इति। हे स्वजनाः बान्धवाः यूयं तं खगम् आत्मरूपिणं पुनः पिञ्जरगतं यथा स्यात् तथा रक्षितुं जातु न यत्नम् आतिष्ठत। स्वतः खम् उड्डन्तुम् उद्यतस्य अस्य सहायाः भवत, यत् विमुक्तः सन् प्रभोः नाम प्रकीर्त्तयन् उद्यायात्।

१२। न किञ्चिदिति। अत्र मृत्युप्रयायां प्रियात् नाम्नः ईश्वरस्येति शेषः न पुनः किञ्चित् मधुरम् अस्ति। ततः ये सर्व्वे प्रयाणार्थम् उद्यतं तं सम्मानयन्ति प्रीणयन्ति च अस्य करुणासिन्धोः नाम इह कीर्त्तयन्तु अस्य तत् मनः ह्लादयन्तु मृत्युभयनिरसनेन भगवद्भक्त्याद्रे केणेति शेषः।

पार्श्ववर्त्तिषु नयने निमील्य शान्तिमद्धृदा ॥
प्रभोर्वाह्वौ तदात्मानमर्पयेत् सुसमाहितः ॥ १३ ॥
हृदयं शान्तभावेन प्रार्थयतु ततः पितः ।
शान्तं सर्व्वं वक्षसि ते प्राप्तं शान्तिं चिरन्तनीम् ॥
अर्थये चानुमन्यस्व त्वमाशा नित्यकालिकी ।
पिता माता प्रियस्त्वञ्च नय मां मे गृहे सुखे ॥ १४ ॥
गताः प्राणाइति वैद्ये वदत्यस्य कलेवरम् ।
धौतं सुगन्धिसमितं कुर्य्यात् केशप्रसाधनम् ॥
नवीनवस्त्रयुग्मेन सम्भावितमनन्तरम् ।
शय्यायां नूतनायाञ्च शयानं छादितं पुनः ॥
शुक्लेन वाससा नूत्नेनानावृतमुखं तदा ॥ १५ ॥

१३ । एवमिति । एवं सः प्रसूतः ततः पार्श्ववर्त्तिषु चरमां दृष्टिं निःक्षिप्य शान्तिमद्धृदा शान्तियुक्तहृदयेन नयने निमील्य सुसमाहितः तदा आत्मानं प्रभोः वाह्वौ अर्पयेत् ।

१४ । हृदयमिति । ततः तदनन्तरं हृदयं शान्तभावेन प्रार्थयतु । हे पितः सर्व्वं शान्तम् (निरस्तम्) । ते तव वक्षसि चिरन्तनीं शान्तिं प्राप्तुम् इह अर्थये अनुमन्यस्व (तां शान्तिमिति शेषः) । त्वं नित्यकालिकी आशा, त्वञ्च पिता माता प्रियः, मां ते सुखे गृहे नय—

शान्तिः शान्तिः शान्तिः ।

१५ । गताइति । गताः प्राणाः इति वैद्ये वदति, अस्य कलेवरं धौतं सुगन्धिसमितं सुगन्धियुक्तं केशप्रसाधनं कुर्य्यात् । अनन्तरम् नवीनवस्त्रयुग्मेन सम्भावितं कलेवरमिति शेषः नूतनायां शय्यायां शयानं पुनः नूतनेन शुक्लेन वाससा अनावृतमुखं यथा स्यात् तथा तदाच्छादितं च कुर्य्यात् ।

पाटलापुष्पसलिलैः सिक्ता पुष्पैर्नवैस्ततः।
नानावर्णविचित्रैस्तु शय्या स्यादाचिता शुभा॥ १६॥
प्रधानाः शोकिनस्तत्र प्रयातं परिवेष्ट्य च।
जानूपर्य्युपविष्टास्ते प्रार्थयेरन् समाहिताः॥
शोकार्त्तानां परमेश विधेहि करुणां प्रभो।
विमोचयाशुसम्पातं शान्तिनिःश्वसितं तव॥
उद्विग्नेषु च चित्तेषु प्रेरयात्र चिरन्तन।
परात्मन् तव शान्तिञ्चानन्दं त्वमात्मने चिरम्॥
विश्राणयालये दासं सौभाग्यविपुलं कुरु॥ १७॥
विश्रुतायाञ्च वार्त्तायां कुट्टीरे वितते शुभे।
मिलिता बान्धवाः स्युस्ते नीतं यत्र कलेवरम्॥
गतेषु चरमां दृष्टिं निपात्य तेषु शोकिषु।
प्रधानो वा पुरोधा वा पुष्पमालां शवोपरि।
वितानयेत् मुखं तस्य च्छादयेत् तदनन्तरम्॥ १८॥

१६। पाटलेति। पाटलापुष्पसलिलैः श्वेतरक्तवर्णयुक्तपुष्पविशेषैः गोलाब इति ख्यातैः वासितैः सलिलैः सिक्ता ततः नानावर्णविचित्रैः पुष्पैः तु शुभा शय्या आचिता स्यात्।

१७। प्रधानाइति। तत्र प्रधानाः ते शोकिनः प्रयातं शवं परिवेष्ट्य च जानूपर्य्युपविष्टाः समाहिताः प्रार्थयेरन्। प्रार्थनामाह शोकार्त्तानामिति। हे शोकार्त्तानाम् प्रभो परमेश, करुणां विधेहि, आशुसम्पातं विमोचय, अत्र तव शान्तिनिःश्वसितं प्रेरय। हे चिरन्तन परात्मन्, आत्मने चिरं तव शान्तिम् आनन्दं च विश्राणय, तव आलये दासं सौभाग्यविपुलं कुरु।

१८। विश्रुतायामिति। बान्धवाः ते वार्त्तायां विश्रुतायां च यत्र कलेवरं नीतं तत्र वितते शुभे कुट्टीरे गृहाग्रे मिलिताः स्युः। चरमां

पुरोधाः प्रार्थयेतैवं बन्धुस्वजनमध्यगः ।
"जनानां जातिसंघस्य चिरन्तन परेश्वर ॥
करे नियतयो यस्य तवासन्तोऽथ यस्य ते ॥
गभीरशोकसन्तप्तै र्हृदयैरश्रुसम्भृतैः ।
नेत्रैरयमुपैमस्त्वां विनयेन प्रियस्य नः ॥
भ्रातुर्हि मृत्युरस्मांश्च सन्तप्तान् कृतवान् शुचा ।
निःक्षिप्तवान् परीवारान् शोके वाक्यातिगे प्रभो ॥
पश्य करुणनेत्रेण हे पितः करुणानिधे ।
असहायानिमान् शोकसन्तप्तान् ये निपातिताः ॥
धृतौ सम्यगभग्नचित्ता ह्लादयोत्थापय त्विमान् ।
सहायोभव चास्माकमर्पणायाश्च ते विभो ॥
भवेम यत् क्षमा वक्तुं भवत्विच्छा यथा तव ।
मिथ्या सर्व्वं परमेश सत्यं त्वं केवलं प्रभो ॥
इहामुत्र ततस्त्वां नः सर्व्वस्वं कर्तुमीश्वर ।
शिक्षयायं हि नो भ्राता संसारस्य निबन्धनात् ॥
विमुक्तश्चिन्तनाद्दुःखाद्दु भावात् सर्व्वविधात् पुनः ।
अनुगृहाण यद्यातुरात्मास्य मङ्गलालय ।
नत्वायां वसतौ वृद्धिं गन्ता स्यान्नितरां त्वयि ॥
विश्वासेऽनुग्रहेणायं तवामेयेन शुद्धिमान् ।
चिरं चिरन्तनं सौख्यमानन्दं लभतां त्वयि ॥ १९ ॥

इष्टिं निपात्य तेषु गतेषु शोकिषु प्रधानः पुरोधाः पुरोहितः वा शवोपरि पुष्पमालां वितानयेत्, तदनन्तरं तस्य प्रयातस्य सुखं छादयेत् ।

१९ । पुरोधा इति । बन्धुस्वजनमध्यगः पुरोधाः पुरोहितः एवं प्रार्थयेत

शान्तिः शान्तिः शान्तिरिति सर्व्वे ब्रूयुः समागताः॥ २०॥
शोकिभिः स्वजनैर्मित्रैरनुयातं कलेवरम्।
भद्रोचितायां खट्वायामुपरि स्थापितं तदा।
नयेत् श्मशाने गाम्भीर्य्येणोपयुक्तेन सर्व्वथा॥ २१॥
रजन्या घोरयामे च मेघे वर्षति वा यदि।
विघ्ने चान्यविधे वापि स्यात् कालापेक्षणन्तदा॥ २२॥

—हे चिरन्तन परेश्वर, यस्य तव करे अस्माकं जातिवंशस्य नियतयः, यस्य ते सन्निधौ वयमसन्तः, तं त्वां वयं गभीरशोकसन्तप्तैः हृदयैः अश्रु-सम्भृतैः नेत्रैः विनयेन च उपेमः। प्रियस्य हि नः भ्रातुः मृत्युः अस्मान् शुचा सन्तप्तान् कृतवान्, परीवारांश्च वाक्यातिगे शोके निःक्षिप्तवान्। हे प्रभो, हे पितः कल्याणनिधे अवछायान् इमान् शोकसन्तप्तान् पश्य, ये सम्यक् भग्नचित्ताः धूलौ निपातिताः। इमान् उत्थापय, क्लादय, तुभ्यम् अस्माकम् अपेक्षाय सहायो भव यत्, हे विभो, वक्तुं क्षमा भवेम यथा तव इच्छा, तथा भवतु। हे प्रभो परमेश, सर्व्वं मिथ्या, केवलं त्वं सत्यम्। ततः, हे ईश्वर, इहामुत्र त्वां सर्व्वस्वं कर्त्तुं नः शिक्षय। अयं हि नः भ्राता (भगिनी वा) संसारस्य निबन्धनात् चिन्तनात् दुःखात् सर्व्वविधात् भारात् पुनः विमुक्तः। अनुग्रहाय यत् यातुः अस्य आत्मा, हे मङ्गलालय, गूढायां वसतौ नितरां त्वयि विश्वासे हर्षं गता, तव अमेयेन अनुग्रहेण शुद्धिमान् अयं चिरन्तनं सौख्यम् आनन्दं त्वयि चिरं लभताम्।

२०। शान्तिरिति। समागताः सर्व्वे शान्तिः शान्तिः शान्तिः इति ब्रूयुः।

२१। शोकिभिरिति। शोकिभिः स्वजनैः मित्रैः अनुयातं भद्रोचितायां खट्वायाम् उपरि स्थापितं कलेवरं तदा सर्व्वथा उपयुक्तेन गाम्भीर्य्येण श्मशाने नयेत्।

२२। रजन्या इति। चेत् यदि रजन्याः घोरयामे, मेघे वर्षति वा

परिष्कृतायां सिक्तायां भूमौ तत्र ह्युपस्थिते ।
देहसम्भावितां खट्वां स्थापयेच्च ससम्भ्रमम् ॥ २३ ॥
प्रचुरैरिन्धनैः शुष्कैर्दार्व्यैर्विरचयेच्चिताम् ।
तथानल्पत्वमस्याः स्याद्दैर्घ्ये हस्तप्रमाणतः ।
अधिका स्यात् तनोरस्य प्रयातस्यान्ततो हि या ॥ २४ ॥
यथाच्छादित एवायं तथा कायन्तु शय्यया ।
न्यस्येच्चितोपरि स्वस्थं तथा तच्चन्दनेन्धनैः ॥
कुर्य्यादावृतमस्यांशः कोऽपि न स्याद्बहिर्गतः ॥ २५ ॥
न तं देहं निष्ठुरेण हस्तेन घर्षयेन्न तु ।
भग्नाङ्गं वा प्रकुर्व्वीत यदन्यद्वर्व्वरोचितम् ॥
हृत्पीड़ाकरमत्रास्मिन् माभून्मृतेऽपि मानभाक् ॥ २६ ॥

यदि, अन्त्यविधि च विघ्ने वा अपि स्यात् म्रतुरिति शेषः तदा कालापेक्षा स्यात् ।

२३ । परिष्कृतायामिति । तत्र स्मशाने उपस्थिते कलेवरे इति शेषः परिष्कृतायां भूमौ देहसम्भाविता खट्वां ससम्भ्रमं स्थापयेत् च ।

२४ । प्रचुरैरिति । यथा अस्याः चितायाः अनल्पत्वम् आकारेण अनूनत्वं स्यात् तथा प्रचुरैः शुष्कैः दार्व्यैः इन्धनैः चितां विरचयेत् या चिता प्रयातस्य अस्य तनोः अन्ततः दैर्घ्ये हस्तप्रमाणतः अधिका स्यात् ।

२५ । यथेति । अयं कायः यथा एव आच्छादितः तथा शय्यया चितोपरि स्वस्थं न्यस्येत् । तं कायं चन्दनेन्धनैः तथा आवृतं कुर्य्यात् यथा अस्य कायस्य कः अपि अंशः वहिर्गतः न स्यात् ।

२६ । न तमिति । तं देहं निष्ठुरेण हस्तेन न घर्षयेत् भग्नाङ्गं न कुर्व्वीत अन्यत् यत् वर्व्वरोचितं न तत् प्रकुर्व्वीत । अस्मिन् देहविषये अत्र यत्

चन्दनकाष्ठखण्डांश्च धूपञ्चागरुकादिकम् ।
न्यस्येच्चितोपरि गन्धद्रव्याणि तानि यत्नतः ॥ २७ ॥
प्रधानः शोकिनां वाथ पुरोधाः स पुरोगतः ।
चितायाः वर्त्तिमुल्कां वा धृत्वा प्रज्ज्वलितां करे ॥
दक्षिणे योजयेत्तस्यामेवं प्रार्थनमुच्चरन् ।
नाम्नेश्वरस्य दहनं पावनं योजयाम्यहम् ॥
प्रयातस्य परित्यक्ते देहे धक्ष्यति नंक्ष्यति ।
नश्वरं खलु यन्नित्यममरं जीवति प्रभो ।
रक्षास्याश्वासय चात्मानं दिव्यधाम्नि कृपानिधे ॥ २८ ॥
दग्धे देहे समग्रे तु प्रोज्ज्वले भाजने ततः ।
धातुविनिर्म्मिते भस्म श्रद्धया निहितं नयेत् ॥ २९ ॥

क्षतपीड़ाकरं तत् मा भूत् । कथम् ? मृते अपि मानभाक् अयं देह इति भावः ।

२७। चन्दनेति। चन्दनकाष्ठखण्डान् च धूपं अगरुकादिकं तानि प्रसिद्धानि गन्धद्रव्याणि च यत्नतः चितोपरि न्यस्येत् ।

२८। प्रधान इति। शोकिनां प्रधानः अथवा स पुरोधाः पुरोहितः चितायाः पुरोगतः प्रज्ज्वलितां वर्त्तिम् उल्कां वा दक्षिणे करे धृत्वा एवं प्रार्थनम् उच्चरन् तस्यां चितायां योजयेत्:—ईश्वरस्य नाम्ना प्रयातस्य परित्यक्ते देहे अहं पावनं दहनं योजयामि। यन्नश्वरं तत् खलु धक्ष्यति नंक्ष्यति, अमरं नित्यं जीवति। प्रभो कृपानिधे, दिव्यधाम्नि अस्य आत्मानं रक्ष आश्वासय च ।

२९। दग्ध इति। समग्रे देहे दग्धे तु धातुविनिर्म्मिते प्रोज्ज्वले भाजने श्रद्धया निहितं भस्म ततः श्मशानभूमेः नयेत् गृहमिति शेषः।

तत् पात्रं निलये रक्षेद् योग्ये स्थाने प्रयत्नतः ।
यावच्छ्राद्धदिनं तत्र समाधिप्रोथितं भवेत् ॥ ३० ॥

इत्यन्त्येष्टिः ।

---

## श्राद्धकर्म्म ।

शोकः स्वाभाविकः स्यान्न जातु शोकप्रदर्शनम् ॥ १ ॥
उन्मूलयेन्न शोकं वा शोकिलच्छलमावहेत् ॥ २ ॥
सहानुभूतिः स्नेहश्च स्वाभाविको ह्यकृत्रिमः ।
प्राप्नोतु वहिरुच्छ्वासं शोकं हृत्तं व्यनक्तु च ॥ ३ ॥
आमोदः सुखभोगश्चोत्सवः किं पूर्व्ववत् त्वया ।
अनुष्ठेयो यदा मान्यः सम्पर्की प्रिय एव वा ॥

३० । तदिति । तत् पात्रं भस्मपूर्णं निलये गृहे योग्यस्थाने श्राद्धदिनं यावत् प्रयत्नतः रक्षेत्, तत्र श्राद्धदिने समाधिप्रोथितं भवेत् भस्मपूर्णपात्रमिति शेषः ।

इत्यन्त्येष्टिः ।

---

१ । शोक इति । शोकः स्वाभाविकः स्वभावसमुत्पन्नः स्यात् जातु कदाचित् शोकप्रदर्शनं शोकानुपस्थितावपि यथैव शोकोऽभूरेवं प्रदर्शनं न स्यात् ।

२ । उन्मूलयेदिति । न शोकम् उन्मूलयेत् उच्छिन्नं कुर्य्यात् बलपूर्व्वकं तद्वेगं रुन्ध्यादिति भावः, न वा शोकित्वच्छलम् आवहेत् । एकत्र स्वाभाविकक्रियारोधादनिष्टापातः, अन्यत्र कपटाचरणमित्युभयत्र दोषदुष्टत्वम् ।

३ । सहानुभूतिरिति । सहानुभूतिः स्वाभाविकः अकृत्रिमः स्नेहः च हि वहिः उच्छ्वासं प्राप्नोतु, हृत् हृदयं तं शोकं च व्यनक्तु ।

प्रयातोऽथ कठोरत्वमनिर्लिप्तत्वमत्र वा।
मन्वानेन प्रदर्श्येत पापञ्चाश्रुविमोचनम्॥
मा भूदेवं कदाचित्ते परमेशप्रसादतः॥ ४॥
परमेशगृहे जातु न स्याद्धृदयशून्यता।
उदासीनजनानान्तु कठोरो धर्म्म एव वा॥
सर्व्वं तत्र भवेन्नित्यं स्वभावानुगतं पुनः॥ ५॥
अनतिक्रम्य सीमानं परिमाणं भवत्विह।
शोकः शोककृतामस्य नातिरेकः कदाचन॥ ६॥
शोकातिरेको मस्तिष्कं विकरोति करोति च।
रोगञ्चोत्पादयत्येषोऽविश्वासञ्च विधातरि॥
चिरविषादभावञ्च पारुष्यं प्रकृतेः पुनः।
विकलयति विश्वासमाशां प्रेमाणमप्यहो।
नित्यं मानवविद्वेषपरं तं कुरुते जनम्॥ ७॥

४। आमोद इति। यदा मानवः सम्पर्कीं प्रियः एव वा प्रयातः, किं त्वया पूर्व्ववत् आमोदः सुखभोगः उत्सवः च अनुष्ठेयः? अथ पश्चान्तरे अश्रुविमोचनं पापं मन्वानेन त्वया अत्र मृत्युघटनायां कठोरत्वम् अनिर्लिप्तत्वम् वा प्रदर्श्येत। परमेशप्रसादतः ते न कदाचित् एवं मा भूत्। उभयत्र हृदयशून्यत्वमनौचियम्।

५। परमेशेति। जातु कदाचित् परमेशगृहे हृदयशून्यता उदासीनजनानां तु कठोरः धर्म्मः एव वा न स्यात्। तत्र पुनः सर्व्वं नित्यं स्वभावानुगतं स्वाभाविकं भवेत्।

६। अनतिक्रम्येति। सीमानं परिमाणम् अनतिक्रम्य इह शोककृतां शोकः भवतु। अस्य शोकस्य अतिरेकः कदाचन न भवतु इति शेषः।

७। शोकातिरेकस्य फलमाह शोकातिरेक इति। एषः शोकातिरेकः मस्तिष्कं विकरोति तस्य विकारं जनयति, रोगं च करोति, विधातरि

विश्वासिंस्तव शोकोऽयं भवत्ववितथः सदा।
परमेशविहीनानामविश्वासवतामिह ॥
आर्त्तनादोऽथ चित्कारो माभूज्जातु तवेश्वरे।
परेऽमरत्वे विश्वाससम्पन्नस्य भवत्वयम्॥
प्रशान्तवेगो भावेन निर्भरार्पणयोस्तथा।
विश्वासस्य विरागस्य भावस्याध्यात्मिकस्य च ॥
दीनतायाश्च फलवान् वर्द्धनाय भवत्वसौ ॥ ८ ॥
नियोजितः परेणोच्चपुण्याभिप्रायसिद्धये।
शोकोमृत्युश्च निर्द्दिष्टः संयमाय यतोवयम् ॥
स्मराम जीवनस्यास्याध्रुवत्वं धनसम्पदाम्।
मानानां गौरवाणाञ्च पार्थिवानामपार्थताम् ॥
अन्विष्याम नित्यकालगतं जीवनसम्पदम् ॥ ९ ॥

अविश्रामं च चिरविषादभावं च प्रकृतेः स्वभावस्य पारुष्यं पुनः उत्पादयति, विश्रामम् आशाम् प्रेमाणम् अपि अहो विकलयति तं शोकपरं जनं नित्यं मानवविद्वेषपरं कुरुते।

८। शोकप्रकारमाह, विश्वासिन्निति। हे विश्वासिन्, तव अयं शोकः सदा अवितथः भवतु। इह तव अयं शोकः परमेशविहीनानाम् अविश्वासवताम् आर्त्तनादः अथवा चित्कारः जातु कदाचित् मा भूत्। अत्र तु तव अयं शोकः परे परमेश्वरे अमरत्वे विश्वाससम्पन्नस्य भवतु। किम्भूतः? निर्भरार्पणयोः भावेन प्रशान्तवेगः, तथा विश्वासस्य विरागस्य आध्यात्मिकस्य च भावस्य दीनतायाश्च वर्द्धनाय असौ शोकः फलवान् तत्तद्भाववर्द्धनेन फलवांश्च भवतु।

९। कथं स्यादयं फलजनकस्तदाह नियोजितइति। परेण परमेश्वरेण उच्चपुण्याभिप्रायसिद्धये शोकः नियोजितः, मृत्युः च संयमाय विनयनाय

ऊर्द्ध्वं सप्तदिवसेभ्यो दिनाष्टम्योर्विहान्ततः।
शोकार्थं विसृजेदेकविधत्वेन दिनान्यतः॥
ऊर्द्ध्वकालोऽपि निर्द्दिश्यो भवेच्छोकातिरेकतः।
सम्बन्धस्य च नैकट्यात् कुत्र कुत्रापि सम्भवात्॥ १०॥
ध्रियेरन् शोकचिह्नानि देशजात्यनुसारतः।
अतिकृच्छ्राणि देहस्य कर्षणानि परित्यजेत्॥
वार्व्वराणि च हेयानि स्वास्थ्यभङ्गकराणि च॥ ११॥
अन्येषु शोकचिह्नेषु चैकत्वरक्षणाय तु।
चीवरखण्डमेकञ्च गैरिकं बिभृयाद्यतः॥
तदेवार्य्यभूमौ हि वैराग्यचिह्नमुत्तमम्॥ १२॥

नियुक्तः, यतः वयम् अस्य जीवनस्य अध्रुवत्वम्, पार्थिवानां धनसम्पदां मानानां गौरवाणां च अपार्थतां स्मराम, नित्यकालगतां जीवनसम्पदम् अन्विष्याम।

१०। शोककालं निर्द्दिष्टमाह ऊर्द्ध्वमिति। मृत्योः दिनात् इह अन्ततः सप्तदिवसेभ्यः ऊर्द्ध्वं शोकार्थम् एकविधत्वेन एकसम्बन्धत्वेऽपि कस्यचित् पञ्च कस्यचित् सप्त त्यादिकमनियमं परिहाय दिनानि उत्सृजेत्। शोकातिरेकतः सम्बन्धस्य च नैकट्यात् कुत्र कुत्र अपि सम्भवात् अतः सप्ताहात् ऊर्द्ध्वकालः अपि निर्द्दिश्यः।

११। ध्रियेरन्निति। देशजात्यनुसारतः शोकचिह्नानि ध्रियेरन् शोकिनेति शेषः। अतिकृच्छ्राणि वार्व्वराणि वर्व्वरोचितानि हेयानि स्वास्थ्यभङ्गकराणि च यानि देहस्य कर्षणानि तानि परित्यजेत्।

१२। अन्येष्विति। अन्येषु शोकचिह्नेषु एकत्वरक्षणाय तु एकं गैरिकं चीवरखण्डं च बिभृयात्, यतः अत्र आर्य्यभूमौ तत् एवहि उत्तमं वैराग्यचिह्नम्।

परिच्छदे भोजने तु सहजत्वमतीव च।
आमोदे परिहासे च भोगी स्याद्वीतरागिता ॥ १३ ॥
ज्ञापनायावधानाय परेषां गैरिकं पुनः।
सुदीर्घं वसनञ्चैकं भूमिस्पर्शि गृहस्य च ॥
स्थापयेल्लम्बमानं तज्जनगोचरप्रावृतौ ॥ १४ ॥
शोककालावसाने चाष्टमेऽह्नि शोककारिणः।
अभिषेकोक्तविधिना स्नायुः परिष्कृतिञ्च ते ॥
विदध्युः श्रेणीबन्धञ्च कुर्य्युः प्रापयितुं पुनः।
समाधिभूमिं तत् पात्रं स्थापितं भस्म यत्र वै ॥ १५ ॥
शोककर्त्ता प्रधानो हि नयेत्तद्भाजनं स्वयम्।
बन्धुषु च वहेत् प्रोक्तं धुनानो गैरिकञ्च तत् ॥
पताकासदृशं वासः सर्व्वे गाम्भीर्य्यभावतः।
अग्रे सरेयुर्गायन्तो गीतं शोकप्रकाशकम् ॥ १६ ॥

१३। परिच्छद इति। परिच्छदे भोजने तु अतीव सहजत्वं स्वाभाविकत्वम्, आमोदे परिहासे भोगे च वीतरागिता स्यात्।

१४। ज्ञापनायेति। परेषां ज्ञापनाय अवधानाय पुनः सुदीर्घम् एकं तत् गैरिकं वसनं च गृहस्य च भूमिस्पर्शि लम्बमानं जनगोचरप्रावृतौ स्थापयेत्।

१५। शोकेति। शोककालावसाने च अष्टमे अह्नि शोककारिणः अभिषेकोक्तविधिना स्नायुः, ते परिष्कृतिं च विदध्युः, यत्र भस्म स्थापितं तत् पात्रं पुनः समाधिभूमिं प्रापयितुं श्रेणीबन्धं च कुर्य्युः।

१६। शोककर्त्तामिति। शोककर्त्ता प्रधानः हि तत् भाजनं पात्रं स्वयं नयेत् बन्धुषु च प्रधानः प्रोक्तं तत् गैरिकं च वासः पताकासदृशं धुनानः वहेत्; सर्व्वे गाम्भीर्य्यभावतः शोकप्रकाशकं गीतं गायन्तः अग्रे सरेयुः।

उपस्थितेषु तत्रैवं प्रार्थयीत पुरोहितः।
तवाज्ञया प्रयातस्य स्वर्गीय पितरत्र तत्॥
निदधामोवयं भस्म पुण्यस्मारकलक्ष्मवत्।
आशिषा योजयेदं त्वं यस्यात्मा तव सन्निधौ॥
प्रयातः शान्तिमस्मै च जीवितेभ्यश्चिरन्तनीम्।
तां त्वं वितर बन्धुभ्यो येयं नश्येन्न जातुचित्॥ १७॥

शान्तिः शान्तिः शान्तिः।

आवृणीत पुरोधास्तत् स्वयं कर्णिकमावहन्।
इष्टकैरिष्टकाचोदचूर्णजैः कर्द्दमैरिह॥ १८॥
स्तम्भं संस्थापयेत्तत्र काले यत्र मृतस्य च।
नामाङ्कितो निखायेत खण्डः श्वेतोपलस्य च॥ १९॥
सर्व्वे पूजागृहे वाथ श्राद्धस्थाने समागताः।
विशेयुरासनेष्वत्राचार्य्यः कुर्य्यादुपासनम्॥ २०॥

१७। उपस्थितेष्विति। तत्र उपस्थितेषु पुरोहितः एवं प्रार्थयेत—हे स्वर्गीय पितः, तव आज्ञया पुण्यस्मारकलक्ष्मवत् प्रयातस्य भस्म वयम् अत्र निदधामः, यस्य आत्मा तव सन्निधौ प्रयातः तस्य इदं त्वम् आशिषा योजय, अस्मै जीवितेभ्यः च बन्धुभ्यः चिरन्तनीं तां शान्तिं त्वं वितर, या इयं जातुचित् न नश्येत्।

शान्तिः शान्तिः शान्तिः।

१८। पुरोधा इति। पुरोधाः, स्वयं कर्णिकम् आवहन् इष्टकाचोदचूर्णजैः कर्द्दमैः इष्टकैः इह तत् पात्रम् आवृणीत।

१९। स्तम्भमिति। काले यथासमयं तत्र स्तम्भं स्थापयेत् यत्र स्तम्भे मृतस्य च नामाङ्कितः श्वेतोपलस्य च खण्डः निखायेत।

२०। सर्व्वइति। सर्व्वे पूजागृहे अथवा श्राद्धस्थाने—यदि पूजागृहे

अधीयेरन् प्रवचनानुप्रयुक्तानि यानि च ।
अध्यापकाभ्यां ज्येष्ठाभ्यां वा तेन विवृणीत सः ॥ २१ ॥
शोकक्लान्तः प्रधानो वा ज्येष्ठपुत्रोऽथवा पुनः ।
श्राद्धकर्त्ता प्रार्थयेत मृते पितरि पार्श्वतः ।
उपविष्टो भवेत्तस्य भ्राता तत्समये समम् ॥
अददास्त्वं प्रभो त्वं तमद्यरोऽस्य पितुस्तु नः ।
मान्यस्य च प्रियस्यातो ऽसहायाः प्रस्थितेरिह ॥
पितृहीना वयं कुत्र गतो जानीमहे न सः ।
देशेऽनाविष्कृतेऽज्ञाते यत्र गच्छन्ति वै मृताः ॥
प्रत्यागच्छन्ति न पुनर्जानीत तं न मानवः ।
इदं जानीमहे यन्नः पिताभैः शोकतोऽस्य च ॥
संसारस्य परीक्षाया मुक्तोऽन्यलोकमाविशत् ।
पितुः पितस्त्वच्चरणे स्थानं देह्यात्मनेऽस्य च ॥
विधेहि दिव्यं पुण्यं स शान्तिं यच्चिनुयाच्चिरम् ।
सन्निधौ तव प्रेमास्यं प्रोज्ज्वलं त्वं विकाशय ॥
तत्समीपे सहायोऽस्य भव पानाय सन्ततम् ।
प्रेमामृतस्य ते हर्षसागरे मज्जनाय च ॥
अहो जानासि नितरामीश्वर त्वं हि किंविधाः ।
असहाया वयं तस्य विरहे यः प्रपालकः ॥

श्राद्धं स्यात् तत्र, अन्यथा यत्र श्राद्धकर्म्म स्यात् तत्र—समागताः अत्र आसनेषु विशेयुः, आचार्य्यः उपासनं कुर्य्यात् ।

२१ । अधीयेरन्निति । तेन आचार्य्येण अध्यापकाभ्यां ज्येष्ठाभ्यां वा यानि च उपयुक्तानि तत्कालोचितानि तानि प्रवचनानि अधीयेरन्, स आचार्य्यः विवृणीत व्याख्यायात् ।

रचको निर्भरस्थानं बलञ्चासीत् विपत्सु च ।
दुःखेषु संसृतौ चासौ पितस्ते शरणं वयम् ॥
अस्मिन् शोके वियोगस्य दशायां दीनवत्सल ।
गच्छामस्त्वं पिता पितृहीनानां यत् प्रभो स्वयम् ॥
महाशोकमसहायानां विधेहि हृदये विभो ।
दुःखार्त्ते विपदापन्ने शान्तिञ्च मधुरं वचः ॥
सान्त्वनाहीनहृदयं ब्रूहि नो दुःखितस्य तु ।
त्वं सान्त्वना महानन्दः शोकानां त्वं निवृत्तये ॥
अस्माकं हृदयं नाथ भोगात्मानाच्च संसृतेः ।
अध्रुवाद्ध्रुवसम्पत्तिं दिव्यधाम्नो नय प्रभो ॥
त्वमस्मान् सान्त्वयास्मिन् ये हृता अस्मद्गृहे तव ।
मिलिताः खलु ते सर्व्वे इति निश्चयवाक्यतः ॥
सुखे तन्निलये काले चास्माकमागमिष्यति ।
कृतकृत्या वयं स्यामो मिलनेश्चामरात्मभिः ॥
पुनोश्व जीवनान्यस्मान् दिव्यधामोपयोगिनः ।
कुरु त्वं गौरवं सर्व्वं तुभ्यं नित्येश्वर प्रभो ॥ २२ ॥

२२। शोककृतामिति। शोककर्त्ता प्रधानः अथवा पुनः ज्येष्ठपुत्रः श्राद्धकर्त्ता सन् प्रार्थयेत, पितरि मृते तत्समये ममम तस्य पार्श्वतः भ्राता उपविष्टः भवेत्,—प्रभो, त्वम् अददाः, त्वं तमहरः। अस्य तु मान्यस्य प्रियस्य च नः पितुः अन्तः प्रस्थितेः वयम् असहायाः पितृहीनाः। कुत्र स गतः न जानीमहे। देशे अनाविष्कृते अज्ञाते यत्र मृताः गच्छन्ति, न पुनः प्रत्यागच्छन्ति, मानवः न तं जानीत। इदं जानिमहे यत् नः पिता अस्य संसारस्य आधेः शोकतः परीक्षायाः च मुक्तः अमरालोकम् आविशत्। पितुः पितः, त्वचरणे अस्य आत्मने स्थानं देहि,

आचार्य्यः प्रार्थयेतैवमाशीर्व्वादमुदीरयेत्।
कर्म्मण्यस्मिन् सुगम्भीरे शान्तिमन्नोऽस्तु प्रभो॥
वयं धूलिसमा ह्यन्तु सत्यमित्युपलब्धये।
शक्तावयं भवेमास्मिन् त्वमेोऽयं न परत्वगो॥
बान्धवाः परिवाराय विभक्ता बहवः पुनः।
मोदयन्तेऽधनात्मान् हा खोयन्ते तेऽधवैव हि॥
एकाकी सम्बलैर्हीनो ह्यनन्ते कालसागरे।
आत्मा तरीं प्लावयति तस्मात्त्वां प्रार्थयामहे॥
ह्यन्नो नित्येऽत्र निष्याध्यात्मिके स्थापयितुं चिरम्।
विश्वासं दृढ़यास्माकं परत्रात्मान् प्रयोजय॥

विधेहि यत् स चिरं तव सन्निधौ दिव्यं पुण्यं शान्तिं च चिनुयात्। तत्समीपे तव प्रोज्ज्वलं प्रेमास्यं विकाशय। सन्ततं तव प्रेमाम्यतस्य पानाय हर्षसागरे मज्जनाय च अस्य सहायः भव। अहो ईश्वर त्वं जानासि, संस्तृतौ दुःखेषु विपत्सु च यः असौ प्रपालकः रक्षकः निर्भरस्थानं, बलं च आसीत् तस्य विरहे वयं किंविधा असहायाः। त्वं प्रभो, स्वयं पितृहीनानां पिता असहायानां सहायः अस्मिन् शोके वियोगस्य दशायां, दीनवत्सल पितः, वयं ते शरणं गच्छामः। विभो, दुःखार्त्ते विषदाग्नि हृदये शान्तिं विधेहि, मधुरं वचः नः सान्त्वनाहीनहृदयं ब्रूहि। दुःखितस्य तु त्वं सान्त्वना, शोकानां निवृत्तये त्वं महानन्दः। नाथ, संसृतेः अध्रुवात् मानात् भोगात् च अस्माकं हृदयं दिव्यधाम्नः ध्रुवसम्पत्तिं नय। अस्मिन् असत् ये हृताः ते खलु सर्व्वे तव गृहे मिलिता इति निश्चयवाक्यतः त्वम् प्रभो अस्मान् सान्त्वय। अस्माकम् आगमिष्यति च काले सुखे तन्निलये अमरात्मभिः मिलनैः च वयं कृतार्थाः स्याम। जीवनानि त्वं पुनीष्व, अस्मान् दिव्यधामोपयोगिनः कुरु। हे प्रभो नित्येश्वर, तुभ्यं सर्व्वं गौरवम्।

नित्यजीवनलाभाय प्रयातायात्मने विभो।
आलोकं गौरवं दिव्यमर्पयास्मादारभ्यहो ॥
वाह्यदृष्ट्या वयं छिन्ना आत्मन्येकत्र संस्थिताः।
तवानन्तकरुणाया धरा स्वर्गो भवत्वसौ ॥
पूर्व्वाभासं यदा लप्स्यामहेऽस्यानन्दसंहतेः।
शिक्षां प्राप्स्यामएवात्र निवस्तुं त्वयि सन्ततम्।
अमराणामृषीणाञ्च परीवारैस्तवानघ ॥
करुणानिधिरस्मिंस्तु परीवारे दिवौकसाम्।
शान्तिं ददातु निलयञ्चेमं स्वर्गं करोतु सः ॥ २३ ॥
एवं देवाशिषं श्राद्धकर्त्ता याचेत भक्तितः।
पिता पितामहः पूर्व्वपुरुषाः प्रपितामह ॥

२३। आचार्य्य इति। आचार्य्यः प्रार्थयेत, एवम् आशीर्व्वाकम् आशीर्व्वचनम् उदीरयेत्।—हे प्रभो शक्तिमन् ईश्वर, वयं धूलिसमाः, त्वं तु सत्यम् इति उपलब्धये अस्मिन् सुगम्भीरे कर्म्मणि वयं शक्ताः भवेम। [जनः] अयम् अस्मिन् क्षणे न परक्षणे। बान्धवाः परिवाराः च, बहवः पुनः विभवाः अस्मान् अधुना मोदयन्ति, हा ते अधुना एव हि लीयन्ते। आत्मा एकाकी सम्बलैः हीनः अनन्ते कालसागरे तरीं प्लावयति। तस्मात्, हे नित्य, अत्र नित्ये आध्यात्मिके नः स्थानं चिरं स्थापयितुम् त्वा प्रार्थयामहे। परन्तु अस्माकं विश्वासं दृढ़य, नित्यजीवनलाभाय प्रयोजय। विभो, प्रयाताय आत्मने दिव्यम् आलोकं गौरवम् अर्पय। यद्यपि अहो अस्मात् वाह्यदृष्ट्या वयं छिन्नाः, आत्मनि एकत्र संस्थिताः। तव अनन्तकरुणया असौ धरा स्वर्गः भवतु। अस्य आनन्दसंहतेः यदा पूर्व्वाभासं लप्स्यामहे, हे अनघ, अमराणां ऋषीणां च तव परीवारैः त्वयि सन्ततं निवस्तुं शिक्षां प्राप्स्यामः एव।

करुणानिधिः अस्मिन् परीवारे दिवौकसां शान्तिं ददातु, इमं निलयं च सः स्वर्गं करोतु।

धन्या भवन्तु ते सर्व्वे बान्धवाः स्वजनाश्च ये।
ऋषयो मुनयो धन्या भवन्त्वार्याः पुरातनाः॥
देशीयाश्च विदेशीया ये च धर्म्मप्रवर्त्तकाः।
भवन्तु ते भविष्यन्तो धन्या वैदेहतां गताः॥
आत्मानो नः परिचिता ये वापरिचिता इह।
बन्धूनां वाथ शत्रूणामध्यात्मलोकमण्डले॥
भिन्नभिन्नविभागस्था धन्याः सर्व्वे भवन्तु ते॥ २४॥
दानान्येवं ततः श्राद्धकर्त्ता संघोषयेदिह।
ओममुके दिने पक्षे मासेऽमुक्यां तिथावहम्॥
पितृभक्त्यनुरोधादीश्वरकामो हिताय च।
अस्य जनसमाजस्योत्सृजाम्येतानि भक्तितः॥ २५॥
शान्तिः शान्तिः शान्तिः।

---

२४। एवमिति। श्राद्धकर्त्ता भक्तितः एवं देवाशिषं याचेत।—पिता पितामहः प्रपितामहः पूर्व्वपुरुषाः धन्याः भवन्तु। बान्धवाः स्वजनाः ये, सर्व्वे ते धन्याः भवन्तु। आर्य्याः पुरातनाः ऋषयः मुनयः धन्याः भवन्तु। देशीयाः विदेशीयाः च ये भविष्यन्तः धर्म्मप्रवर्त्तकाः ते धन्याः भवन्तु। वैदेहतां गताः ये वा नः इह परिचिताः अपरिचिताः अध्यात्म-लोकमण्डले भिन्नभिन्नविभागस्थाः शत्रूणाम् अथवा बन्धूनाम् आत्मानः, सर्व्वे ते धन्याः भवन्तु।

२५। दानमिति। ततः श्राद्धकर्त्ता इह एवं दानानि संघोषयेत् जनानां विदितानि कुर्य्यात्।—ओं अद्य अमुके दिने अमुके पक्षे अमुके मासे अमुक्यां तिथौ अहम् ईश्वरकामः पितृभक्त्यनुरोधात् अस्य जनसमा-जस्य हिताय च एतानि भक्तितः उत्सृजामि।

शान्तिः शान्तिः शान्तिः।

इति श्राद्धकर्म्म।

## व्रतम् ।

गृह्यानुष्ठानजातातिरिक्तानि विविधानि च ।
व्रतानि जनभेदेन नवविधानमण्डली ॥
उच्चाध्यात्माभिप्रायाणां साधनानि दिशत्यसौ ॥ १ ॥
गुणोत्कर्षो न तेष्वस्ति मन्तव्यं त्वस्ति सत्फलम् ।
व्यवहारोपयोगित्वं निर्व्विवादमिदं पुनः ॥ २ ॥
गौरवाय न मानाय चरेदुपकृतेर्व्रतम् ॥ ३ ॥

१। प्रधानानि गृह्यानुष्ठानान्युक्तान्यधुना व्रतानि वक्तुमारभते गृह्येति। असौ नवविधानमण्डली गृह्यानुष्ठानजातातिरिक्तानि यानि प्रधानानि गृह्यानुष्ठानान्युक्तानि तदतिरिक्तानि विविधानि उच्चाध्यात्माभिप्रायाणां साधनानि यैरुच्चा अध्यात्माभिप्रायाः साध्यन्ते तादृशानि जनभेदेन यस्य यस्य जनस्य यदुपयोगि तेन तेन च पृथग्भूतस्य जनविशेषस्य पार्थक्येण व्रतानि दिशति उपदिशति।

२। न हि बाह्यव्रतानां केऽपि विशेषगुणाः सन्ति यैः फलान्युत्पद्यन्ते अथापि तेषां फलवत्तास्ति मनस उपरि क्रियाकारित्वादतो न तु गुणोत्कर्ष इति। तेषु व्रतेषु न गुणोत्कर्षः अस्ति मन्तव्यम् न इति शेषः। तदनुष्ठानेन गुणोत्कर्षः समुपतिष्ठते येन चानुष्ठाता फलवान् भवतीति नैवं मन्तव्यम् फलप्राप्तेरीश्वरकृपाधीनत्वात्। तु अथापि सत् फलम् व्यवहारोपयोगित्वम् अवश्यमिदं तेषामनुष्ठानेन क्रियाकारित्वम् अस्ति इदम् पुनः निर्विवादम्। यद्यपि फलं कृपाधीनं तथापि यत् तेषां व्रतानामनुष्ठानमीश्वरानुग्रहोपपत्तिः ततः फलवत्ता व्यवहारयोग्यता स्वीकर्त्तव्या। ननु कथमुक्तं न तेषु गुणोत्कर्षोऽस्तीति? मया व्रतमनुष्ठितमतोऽवश्यं फलमिदं प्राप्नोमीति व्रते गुणोत्कर्षारोपणेनोपतिष्ठते गर्वस्तत्परिहाराय।

३। तदेव स्फुटीकर्त्तुमाह गौरवायेति। न गौरवाय मानाय व्रता-

एकस्य फलदान्यन्यहेतोर्न तु कदाचन ।
व्यवस्थेयान्यृतौ यानि सर्व्वर्त्तुषु न जातुचित् ॥ ४ ॥
सत्यं तानीह योज्यानि जनावस्थाविभेदतः ।
भेषजानीव संहर्त्तुमभावांश्च विशेषकान् ॥ ५ ॥
ऋते प्रयोजनं यत्तु व्यर्थमाड़म्बरोहि तत् ॥ ६ ॥
अभावा विविधाः सन्ति तथा प्रयोजनानि च ।
तादृशानि व्रतान्यत्र शोधनायात्मनस्ततः ॥ ७ ॥
व्रतान्यव्यभिचारस्य मादकासेवनस्य च ।
वैराग्यस्य तु शौगस्य भक्तेरात्मार्पणस्य च ॥

चरणेन जनसमाजे गौरवं स्यात् सम्भ्रमः स्यादिति मत्वा न व्रतं चरेत्, किन्तर्हि उपकर्त्तेः उपकारनिमित्तम् । आध्यात्मिकलाभस्तत उपतिष्ठतेऽतस्तदनुष्ठानम् ।

४। पात्रभेदात् कालभेदात् तेषां पार्थक्यं वक्तुमाह एकस्येति। यानि व्रतानि एकस्य जनस्य फलदानि न तु तानि कदाचन अन्यहेतोः फलदत्वेन व्यवस्थेयानि, यानि ऋतौ एकस्मिन्निति शेषः फलदानि न जातुचित् सर्व्वेषु ऋतुषु फलदानि।

५। सत्यमिति। सत्यम् इह तानि व्रतानि भेषजानि इव विशेषकान् अभावान् च संहर्त्तुं जनावस्थाविभेदतः योज्यानि। न ह्येकं भेषजं सर्व्वास्ववस्थासु सर्व्वेषु जनेषु युज्यते, तथैव व्रतमिति ज्ञेयम् ।

६। ऋते इति। प्रयोजनम् ऋते यत् व्रतं तत् हि व्यर्थम् आधिक्यमात्रम्, आड़म्बरः बाह्यप्रदर्शनम् ।

७। अभावा इति। अभावाः विविधाः तथा प्रयोजनानि च विविधानि सन्ति आत्मनः शोधनाय ततः नवविधानमण्डलीतः अत्र तादृशानि व्रतानि योज्यानीति शेषः ।

दानस्य च क्षमायाश्च विद्यार्थं विनयस्य च ।
वाध्यत्वस्यात्मविश्वस्य दयायाः सर्व्वप्राणिषु ॥ ८ ॥
एवमन्यानि चाध्यात्मोद्दाहस्याव्र व्रतानि च ।
पितृभक्तेस्तथा भ्रातृस्नेहवात्सल्ययोः पुनः ॥
परिष्कृतेर्ग्रहस्थानां मिताचारस्य सर्व्वथा ॥ ९ ॥
नारीणाञ्च नराणाञ्च यूनाञ्च मिथुनसंहतेः ।
पतिपत्नीविहीनानां राज्ञाञ्चाथ प्रजावशेः ॥
कुमाराणां कुमारीणां विवोढ़णां सुसम्पदाम् ।
दरिद्राणां प्रेरितानां ग्रहस्थानाञ्च रोगिणाम् ।
सुस्थानां दाससंघानां प्रभूणाञ्च व्रतानि च ॥ १० ॥
सामाजिकानि गार्हस्थाणि चाध्यात्मिकानि तानि च ।
नैतिकानि मानसानि राजसम्पर्कवन्ति च ॥
मनुष्यमात्ररक्तानां तथा देशहितैषिणाम् ॥ ११ ॥

८। विविधानि व्रतान्याह व्रतानीति। अव्यभिचारस्य, मादकासेवनस्य च, वैराग्यस्य, योगस्य, भक्तेः, आत्मार्पणस्य च, दानस्य च क्षमायाः च, विद्यार्थम्, विनयस्य च, वाध्यत्वस्य, आत्मविश्वस्य, सर्व्वप्राणिषु दयायाः व्रतानि।

९। एवमिति। एवम् अत्र अन्यान्यानि च व्रतानि यथा—अध्यात्मोद्दाहस्य, पितृभक्तेः, तथा भ्रातृस्नेहवात्सल्ययोः भ्रातृस्नेहस्य वात्सल्यस्य च, सर्व्वथा परिष्कृतेः, ग्रहस्थानां, मिताचारस्य च।

१०। नारीणामिति। नारीणामित्यादीनां पृथक् पृथक् व्रतानि।

११। सामाजिकानीति। समाजग्रहात्मनीतिमानसराजसम्पर्कीयानि व्रतानि तथा मनुष्यमात्रं प्रति राजभक्तानां देशहितैषिणां व्रतानि।

अत्र मण्डलीसमाचरितानि कतिचित् व्रतानि साम्प्रतं संहितायामनुक्तमसुचये निःक्षिप्तानि संगृह्यन्ते ।

भक्तेः संयमव्रतम्।

प्रातः संस्मरणं स्नानं नामश्रवणकीर्त्तने ।
उपासना च ग्रन्थेभ्यो विविधेभ्यो धृतस्य च ॥
भक्तिसम्बन्धिनः श्लोकाख्यानादेः पाठ एव च ।
रन्धनं चान्नदानं च दरिद्रभरणार्थकम् ॥
भक्तानां प्राणिनां सेवा तरुगुल्मादिकस्य च ।
आहारोऽन्यर्थहितार्थं च श्लोकादेः पठितस्य च ॥
आवृत्तिः सत्प्रसङ्गश्च रहसि स्तवकीर्त्तनम् ।
प्रार्थना कीर्त्तनं देवे सजने भक्तसन्निधौ ।
आशीर्याचनमेतानि संयमो भक्तिसिद्धये ॥

योगस्य संयमव्रतम्।

प्रातः संस्मरणं स्नानं नामश्रवणमेव च ।
उपासना च श्लोकादेर्योगसम्बन्धिनस्तथा ॥
पाठश्च विविधग्रन्थात् रन्धनं दानमेव च ।
अन्नानां सुदरिद्राय सेवा च पशुपक्षिणाम् ॥
तरुगुल्मादिकानां च भोजनं पठितस्य च ।
श्लोकादेर्हितमुद्दिश्य परेषां पठनं पुनः ॥
सत्प्रसङ्गस्तपस्या च ध्यानं देवे च निर्जने ।
सङ्गीतं च स्तवश्चैव भक्ताशीर्व्वादयाचनम् ॥
योगाभ्यासो निशीथेऽत्र संयमो योगसिद्धये ॥

नित्यकृत्यम्।

प्रातः संस्मरणं नाम साधनोपासने तथा ।
पाठः कार्य्यं सत्प्रसङ्गो भक्तवन्दैश्च कीर्त्तनम् ॥
निदिध्यासनसंयुक्तश्चित्तस्य संयमस्तथा ।
एतानि नित्यकृत्यानि साधने भक्तियोगयोः ॥

मासिककृत्यम् ।

पितरौ भक्तः पत्नी च विरोधिभ्रातरौ तथा ।
सन्ततिर्दासिदीनाश्च तथा च पशुपक्षिणः ॥
एते संसेवनीयाः स्युर्मासादौ तु यथाक्रमम् ॥

तयोर्विशेषव्रतम् ।

ऋते कुटुम्बिनीरक्षा बालिकाश्च नार्योपिताम् ।
पश्येत्तं पादयोर्नित्यं विनीतौ बद्धाञ्जली ॥
एवं व्रतधरौ स्यातां मासमेकं यथाविधि ।
जनक्षेमविधानार्थं पवित्रप्रेमसिद्धये ॥

---

भक्तानुगमनसंयमव्रतम् ।

प्रातः संस्मरणं स्नानं नामश्रवणकीर्त्तने ।
उपासनं रन्धनञ्च दरिद्रायान्नप्रेषणम् ॥
भक्तानां प्राणिनां सेवा तरुगुल्मादिकस्य च ।
आहारः सत्प्रसङ्गश्च सज्जने कीर्त्तनार्थनम् ॥
स्तवनं कीर्त्तनञ्चैव विविक्ते भक्तसन्निधौ ।
आशीर्याचनमेतानि भक्तानुगमसंयमे ॥

---

परिचारिकाव्रतम् ।

नित्यकृत्यम् ।

नामसंश्रवणञ्चोपासना च रन्धनक्रिया ।
भक्तसेवा भोजनञ्च कार्य्यं सांसारिकन्तथा ॥
पाठोऽथवा तच्छ्रवणं प्रार्थना विजने स्थले ।
परिचारिकया नित्यं कार्य्याण्येतानि यत्नतः ॥

मासिककृत्यम् ।

भक्तदम्पत्यामात्यभक्तोदीनजनास्तथा ।
दासी पशुपक्षिणौ च तथा वृक्षलतादिकम् ।
मासाद्यसप्तदिवसे ह्येते सेव्या यथाक्रमम् ॥

स्त्रीणां मासिकव्रतम् ।

नित्यकृत्यम् ।

मात्रासुचारणञ्चोपासनं पाठोऽथवा श्रुतिः ।
दर्पितस्य च तृष्णायाः प्राप्तिराहार एव च ॥
अध्ययनं पुस्तकादेर्जीवानां सेवनन्तथा ।
वृद्धसेवा गात्रशुद्धिः सन्तानार्थं च प्रार्थनम् ॥
विविक्ते चुम्बनेनेव ललाटे शयनार्थिनाम् ।
आशीरुचारणञ्चापत्यानां नित्यव्रतं स्मृतम् ॥

साप्ताहिककृत्यम् ।

प्रातःस्नानं रन्धनञ्च सेवा दीनजनस्य च ।
दासदासीजनानाञ्च स्वामिसन्तानयोस्तथा ॥
सत्प्रसङ्गोऽवलाजातेर्हेतोर्मङ्गलप्रार्थनम् ।
साप्ताहिकव्रतश्चैतच्चर्य्यं सप्ताहविवासरे ॥

---

पाक्षिकव्रतम् ।

बालानाम् ।

स्नानं नमस्कृतिर्मातृसेवा च पशुपक्षिणाम् ।
वृक्षाणां सेवनं प्रातरपराह्ने च यत्नतः ॥
अर्थदानं दरिद्राय पानीयदानमेव च ।
पाठश्च पाक्षिकं ज्ञेयं व्रतं ग्रीष्मवकालिकम् ॥
पितुर्भ्रातृभगिन्योश्च सेवा बुधे रवौ तथा ॥

---

वैराग्यव्रतम् ।

भिक्षाशनं संवरणं हासस्यानवरतस्य च ।
अशितस्यावशेषस्य स्वपत्यास्थापनन्तथा ॥
उत्सङ्गे चेदनाक्रान्तमसाध्यव्याधिना ततः ।
ब्रह्मनामजपः कार्य्यो दारासुखेऽवलोकिते ॥

चतुर्हस्तमिमं स्थानं ज्ञातव्यं परबोधितः।
आसनं प्रति यत्नोऽत्र तथाप्रयस्रनस्य च॥
एकविधं रक्षणीयं मासत्रापि व्रतस्थिरम्।
वैराग्यस्य वर्द्धनाय रक्षितव्यं सुयत्नतः॥

---

प्रज्ञापद्माब्जव्रतम्।

नामसङ्कीर्त्तनं बालवालिकाध्यापनन्तथा।
जीवसेवोपासनञ्च रन्धनं पाठसंस्तुतिः॥
विश्रामश्च तथालापः कार्य्यं रक्षादिसेवनम्।
निदिध्यासनमन्ते विश्रान्ते नगरकीर्त्तनम्॥
सत्प्रसंगश्च विज्ञेयं प्रज्ञापद्माब्जकव्रतम्॥

---

मासान्तव्रतम्।

नामगानोपासने च तथा रन्धनमेव च।
ब्रह्मगीताध्ययनञ्च समभालोचनन्तथा॥
प्रतिज्ञाकरणं मुद्राङ्कनाथञ्च निवन्धनम्।
प्रवन्धानां तथा कार्य्यं रक्षवह्न्यादिसेवनम्॥
साधनं निर्ज्जने गीतिः सर्व्वं मासान्तकव्रतम्॥

---

काननव्रतम्।

निषेधः।

प्रयोजनविशेषेण मुमनिञ्च विना न हि।
कानने समयभेदात्स्योपवासौ च निन्दनम्॥
जनानां दिवसे निद्रां रात्रौ जागरणं तथा।
कुसकञ्च त्यजेत् पुष्पफलोपचयनं तथा॥
विनानुमतिमेतेन स्युर्निषेधविषया इह॥

विधिः।

समागमेऽतिथीनाञ्च गात्रोत्थानञ्च सेवनम्।
फलपुष्पद्रव्यकार्यां सेवा सुष्ठु परिक्रिया॥
चङ्क्रोपासनभूम्योश्च फलपुष्पोपढौकनम्।
स्रोकानां खाद्यानद्यानां कण्ठस्थीकरणं पुनः॥
प्रतिज्ञापालनायैव यत्नः साध्यानुसारतः।
(१) नाभिमन्ये ऽहं कस्मिंश्चित् श्रेष्ठोऽहमिति कर्हिचित्।
(२) न येषां प्रति कामार्त्तः कुचिन्ता सावकाशये॥
(३) नाहं कदाप्यसूये संपश्यन् सुखिनो जनान्।
(४) स्तनेयं न मे मिथ्यावाक्यमामोदविभ्रमात्।
अनवधानतो वापि कदापि समुदीरयेत्॥
(५) वाचा परुषया चिन्तयर्या नोत्पादयाम्यहम्।
(६) कर्म्मणा मनसा वाचा वसाम्यनुगदासवत्।
(७) प्रसादायाग्रिमे नित्यं भ्रातृणामस्मि चोत्सुकः।
(८) सत्सेवार्थं मङ्गलाय जनानामात्मनोऽप्यहम्।
उपयुक्तं श्रमं नित्यमकुर्व्वाणोऽत्र दत्तये॥
न गच्छामि जातु धानां विधातुः शास्त्रसञ्चयात्।
स्वदेशस्य विदेशस्य बन्धूनां हितकामतः।
विंशत्यूनपत्राणां लिखनं विषया विधिः॥

नित्यकृत्यानि।

प्रातःसंस्मरणीयञ्च नामसाधनमेव च।
पाठश्चोपासना पाठरन्धनादि विनोदनम्॥
श्रान्तेः कार्यं सत्प्रसङ्गः संगीतं वनसेवनम्।
गात्रशुद्धीरहस्यात्र निदिध्यासनमेव च।
संगीतं सत्प्रसङ्गश्च कृत्यानि दैनिकानि च॥

पुनःपाक्षिकव्रतम् ।

बालानाम् ।

ज्ञानं चोपासनं दानं पानीयस्य च सेवनम् ।
मातुः पक्षिपशूनाञ्च दयायां दानमेव च ॥
दरिद्रेभ्यः साधकानां सेवा पाठश्च नित्यदा ।
पितुर्भ्रातृभगिनीनाञ्च बुधे सेवा रवौ तथा ॥

वयस्यानाम् ।

ज्ञानञ्चोपासना सेवा साधूनां पशुपक्षिणाम् ।
साधुजीवनपाठश्च दयायां सेवनन्तथा ॥
सन्तानानां गात्रशुद्धी रहसि प्रार्थना पुनः ।
आशीर्व्वचारणं नित्यं ललाटे प्रायनार्थिनाम् ॥
सन्तानानां चुम्बनेन बुधे रवौ च रन्धनम् ।
स्त्रीजातीनां मङ्गलार्थं प्रार्थने भृत्यसेवनम् ॥

---

मैत्रेयीव्रतम् ।

प्रातःस्मर्त्तव्यमखिलदेशजातिभुवां पुनः ।
साधूनां वन्दना शास्त्रोद्धृतानां संग्रहोन्वहम् ॥
श्लोकानां वरणीयोऽत्र विविधानां विशेषतः ।
सोमे बुधे च शुक्रे च रवौ च तत्त्वीरधाम् ॥
सेवा कुजे गुरौ सम्यक् शनौ च पशुपक्षि[illegible]म् ।
श्रद्धया स्वामिना सार्द्धं ब्रह्मस्तोत्रानुकीर्त्तनम् ॥
कथोपकथनं धर्म्मविषयं पठनन्तथा ॥
मैत्रेयीशास्त्रवाद्दृत्तिमैत्रेय्याः प्रत्यहं मुदा ॥

साम्वत्सरिकदिनकृत्यम् ।

समाहाम्बदिने स्वर्णदानमुद्दिश्य मन्दिरम् ।
अंगनसंमार्ज्जनीदानं प्रचारकेभ्य ओदनः ॥
देयो दीनजनेभ्योऽथ पथ्ये वस्त्रादिकं तथा ॥

---

लीलावतीव्रतम्।

ज्ञानदयाचञ्चकानि विज्ञानघटितानि च।
सप्त सत्यानि नारीणां कर्त्तव्यद्योतकास्तथा॥
श्लोकाः सप्तेतिहासोक्ताव्यद्भुता घटनाः शुभाः।
सप्ताश्चर्य्यकीर्त्तयश्च पृथिव्यामार्य्ययोषिताम्॥
लीलावतीप्रमुखाणां धन्यवादश्च नित्यदा।
लीलावतीव्रते चेते विषया विधिसंगताः॥

---

वृद्धसाधकव्रतम्।

(१) निर्व्वर्त्तयेद्व्रती नित्यं ब्रह्मोपास्तिं यथाविधि।
(२) धने प्राप्ते समुत्थाय नमेद्ब्रह्माङ्घ्रिपङ्कजम्।
(३) अर्थानां सद्व्यये यत्नोऽनृणित्वे च निरन्तरम्।
(४) मासि मासि दीनसेवा हेतोरर्थविसर्ज्जनम्।
(५) विफले समयक्षेपे स्यान्नित्यमनुतापवान्॥
(६) नित्यं स्वास्थ्यविधिं रक्षेत् गृहमध्ये ह्यतन्द्रितः।
(७) उपासनाञ्च धर्म्मञ्च संस्थापयितुमुद्यमम्।
परिवारजनेष्वेष कुर्व्वीतातिप्रयत्नतः॥
(८) पूर्ब्बञ्च दैनिकाहारात् पयःपाने हृषाद्दिते।
सांसारिके शुभे कर्म्मण्यापदां भञ्जनेऽपि वा।
रोगशान्तौ धन्यवादं ब्रह्मोद्दिश्य प्रयोजयेत्॥
(९) संस्कृत्य ब्रह्म भुञ्जीत प्रथमं वार्षिकं फलम्।
(१०) सद्ग्रन्थाध्ययनं कुर्य्यात् साधुसङ्गञ्च साधकः।
(११) इन्द्रियाणां निग्रहाय यत्नञ्च चित्तशुद्धये।
समे कनिष्ठे ज्येष्ठे च सौभ्रात्रं स्नेहसम्मतौ॥
(१२) यथावकाशं भ्रमतां संगतिश्चायुषं चिरम्।
ब्राह्मधर्म्मप्रचारार्थं प्रयतेत यथामति॥

---

पुनः स्त्रीणां मासिकव्रतम् ।

नामपाठो नमस्कारः साधुभ्योऽध्ययनं तथा ।
अर्चा प्रातर्भगवतस्त्वाह्नि मध्ये श्रुतस्य च ॥
ग्रासस्य च सायाह्ने दानञ्च पानीयस्य तु ।
भक्तेभ्यो रन्धनं केशावर्णं गमनस्य च ॥
कालेऽत्र मन्दिरे चैकतन्त्रा रहसि साधनम् ।
संगीतञ्च नवविधैः सन्ध्यानैः प्रार्थनं पुनः ।
श्रीचैतन्यस्य वृत्तान्तश्रवणं जीवनस्य च ॥

तथा च ।

प्रातःसंस्मरणीयञ्च स्नानकालेऽत्र भक्तितः ।
नामपाठस्तथोपास्तिः पठनं भजनस्य च ॥
दानं सेवा च दासीनां संगीतं चिन्तनं तथा ।
नवविधानमङ्गीतं रहस्याध्ययनं पुनः ॥
श्रीमदीशाजीवनस्य सतप्रसंग इह व्रते ॥

---

पुनर्बालानां पाक्षिकव्रतम् ।
स्नानकाले नामपाठश्चोपास्तिः पानीयस्य च ।
दानं पात्रैः पितृमात्रादीनसेवा च भक्तितः ।
बुद्धजीवनपाठश्च श्लोकस्यैकस्य चाभ्यहम् ।
कण्ठस्थीकरणं प्राक् च भोजनादाचमनं तथा ॥
प्रार्थनायाश्च संगीतं विधानस्य नवस्य च ॥

प्रार्थनामन्त्र ।

ददतेऽन्नमिदं देहरक्षार्थं ते नमोनमः ।
कार्यं मे कृपया देव स्वतकर्मणि नियोजय ॥

---

विवाहात् प्राक् वरकन्ययोश्चतुर्द्दिनव्यापि
व्रतम् ।

प्रातरुत्थाय चोच्चार्य्य दयामय हरे इति ।
वारान् विंशतिमन्ते तं नमेतां भक्तिपूर्व्वकम् ॥
प्राचीनार्य्यऋषीणाञ्च वरः कन्या च सादरम् ।
पूर्व्वासामार्य्यनारीणां नामान्युच्चार्य्य तांश्च तान् ॥
नमस्येतां स्नानकाले सच्चिदानन्द मानसम् ।
देहञ्च संपुनीहि त्वम् इति वारांश्च पञ्च च ।
उच्चार्य्यं त्वपराह्णेऽधीयातां वार्त्तां पुनर्गुरौ ।
चैतन्यस्य च सन्न्यासस्याथ बुद्धस्य तां कवौ ॥
प्रनाविंशाःपरीक्षायाः पतिपत्न्योः रवौ तथा ।
कर्त्तव्यविषयश्लोकान् सेवेयातां पशून् खगान् ॥
वृक्षान् लताश्चोपहारैर्मानयेतां गुरून् पुनः ।
सम्भावयेतां दानेश्च दरिद्रांश्च रहस्यथ ॥
गायेतां ब्रह्मसंगीतं चिन्तयेतां परं मुदा ॥
प्राग्विवाहाद्व्रतञ्चेदं चतुर्द्दिवसरूक्ततम् ॥

युगलसाधनव्रतम् ।

पाठो वा श्रवणं सेवा दानञ्च क्रमशः स्मृतम् ।
सोमादारभ्य भास्वन्तं यावत् सञ्चरितं मह्वत् ॥
ईशासो गोतमस्याथ गौरांगस्य महात्मनः ।
मोहम्मदनानकयोस्तता च शिवदुर्गयोः ॥
याज्ञवल्क्यस्य मैत्रेय्या दम्पत्योः सुप्रसिद्धयोः ।
पठितव्यं वा श्रोतव्यं पतिश्च पितरौ तथा ॥
सन्ततिर्भ्रातरौ दासीदासी दुःखिजनः पुनः ।
प्रचारकाश्च संयोज्य काञ्चनं रजतं तथा ॥
ताम्रं वस्त्रं धान्यमथो भेषजं ज्ञानमप्यत ।
देयं प्रातःस्मरणीये सच्चिदानन्दसन्नतिः ॥

न शक्तो रचितुं कोपि तानि प्रभोर्बलं विना ॥ १२ ॥
नाभिप्रैति च गृह्णाति सिद्धिस्त्वीशानुकम्पया ॥ १३ ॥
शक्तिस्ते नास्ति विघ्नानामुपरि स्मर साधक।
न त्वत्क्रिया फलवती पापस्यैकस्य शोधने ॥ १४ ॥

साध्वीजननमस्कारो नतिर्नवविधेस्तथा।
स्नानकाले च वारांस्त्रीन् जले हरिरितीह तु ॥
उच्चार्यं भुक्तिकालेऽन्ने हरिरित्यन्वहं पुनः।
पत्या योगसाधनञ्च देवमन्दिरमार्ज्जनम् ॥
कुटीरे साधनं गूढं व्रते युगलसाधने ॥

---

नित्यप्रातःस्मरणीयम्।
गात्रशुद्धिः सुस्थतायाः साधनं ब्रह्मपूजनम्।
सच्चिन्ता सत्यशिक्षा च सत्यभाषणपालने ॥
सत्प्रसङ्गो दीनसेवा तथेन्द्रियविनिग्रहः।
संसारशुद्धिरर्थानां व्यवहारो यथायथम् ॥
नरनार्य्योर्निखिलयोः प्रीतिर्नित्यं सुनिर्म्मला।
अहिंसा च क्षमा शुची यथाकर्त्तव्यसाधनम् ॥
व्रतं ब्रह्मसाधकानामिदं प्रातः स्मराम्यहम्।
विवेकी ब्रह्मभक्तोऽद्य पुण्यं शान्तिं चिरन्तनीम्।
यथा सच्चिन्मयीं ब्रह्मपादपद्मान्तरे सुखम् ॥

---

१२। न शक्त इति। तानि व्रतानि प्रभोः बलं विना न कोऽपि रचितुं शक्तः।

१३। नेति। ना मनुष्यः अभिप्रैति गृह्णाति च व्रतमिति शेषः, सिद्धिः तु ईशानुकम्पया ईश्वरानुग्रहेण।

१४। शक्तिरिति। साधक, विघ्नानाम् उपरि ते तव शक्तिः न अस्ति, स्मर, एकस्य पापस्य शोधने त्वत्क्रिया न फलवती।

व्रतानां जीवनं श्रेयं प्रार्थनं तच्च तत्फलम् ॥ १५ ॥
गुणवत्ता ततो नास्ति पद्धतिषु क्रियासु च ।
कालव्याप्तिषु सारल्यादिनयात् प्रार्थनेषु तु ॥ १६ ॥
अतस्त्वं व्रतकालेषु गर्व्वञ्चाहङ्कृतिं त्यजन् ।
सर्व्वथात्मार्पणेनाथ देवानुग्रहमाश्रय ।
अन्विष्यैकाग्रहृदयेनालोकं परमात् पितुः ॥ १७ ॥
इति व्रतोपक्रमणिका ।

---

रिपुसंहारव्रतम् ।

सर्व्वेभ्यः प्रथमं श्रेयं रिपुसंहारकं व्रतम् ॥ १ ॥
यतः पुण्यं मुख्यतमं सर्व्वस्मात् संसृताविह ।
आत्मजयः शोधनं च व्रतेषूत्तमं ततः ॥ २ ॥

१५। व्रतानामिति। व्रतानां जीवनं प्रार्थनं श्रेयम् तच्च प्रार्थने तत्फलं तस्य व्रतस्य फलं निश्चितमिति शेषः।

१६। गुणवत्तेति। ततः पद्धतिषु क्रियासु कालव्याप्तिषु च गुणवत्ता न अस्ति, तु किन्तु सारल्यात् विनयात् प्रार्थनेषु फलवत्तास्तीति शेषः।

१७। अत इति। अतः त्वं व्रतकालेषु गर्व्वम् अहङ्कृतिं च त्यजन् अथ सर्व्वथा आत्मार्पणेन देवानुग्रहम् आश्रय, एकाग्रहृदयेन परमात् पितुः आलोकम् अन्विष्य।

इति व्रतोपक्रमणिका।

---

१। व्रतेषु सर्व्वप्रधानत्वादपरेषां सिद्धौ मूलत्वात् सर्व्वादौ रिपुसंहारव्रतमाह सर्व्वेभ्य इति। सर्व्वेभ्यः व्रतेभ्यः रिपुसंहारकं व्रतं प्रथमं श्रेयम्।

२। कथं तस्य प्राधान्यं तदाह यत इति। यतः इह संसृतौ

प्रबलानां हि पापानामधीनत्वं विहाय च।
पुण्यलाभोऽत्र जीवानां प्रयत्नविषयोऽधिमः ॥ ३ ॥
केचित् क्रोधपराः केचित् कामाधीना हि लोभिनः।
केचित् गर्व्ववशाः केचित् स्वार्थेनान्धतमाः पुनः ॥
सर्व्वथा हृदयान्येषामसंयिन्ताहितानि च।
दुर्व्वासनावशान्यातः प्रार्थनापैनसाधनम् ॥ ४ ॥
तेषां रिपूणां संहारपराभवप्रसिद्धये।
अनुष्ठेयोऽपरिच्छेदी यमो दृढतरस्ततः ॥ ५ ॥
तज्जनितापराधानां गुरुत्वमनुभूय च।
अनुतापेन सारल्यविनयावनतात्मिनम् ॥

सर्व्वस्मात् पुण्यं हि उत्तमम्, ततः आत्मजयः प्रोधनं च तेषु उत्तमम्।

३। प्रबलानामिति। हि यस्मात् प्रबलानां पापानाम् अधीनत्वं च विहाय पुण्यलाभः जीवानाम् अधिमः प्रयत्नविषयः।

४। जनभेदात् रिपुवशत्वं प्रदर्शयति केचिदिति। केचित् क्रोधपराः, केचित् कामाधीनाः, केचित् लोभिनः, केचित् गर्व्ववशाः, केचित् पुनः स्वार्थेन अन्धतमाः अत्यन्धाः, एषां हृदयानि सर्व्वथा असंयिन्ताहितानि दुर्व्वासनावशानि, अतः अतोहेतोः प्रार्थनापैनसाधनं प्रार्थनापैनयोः प्रतिरोधो भवति। भवति प्रार्थना तेषां शुष्का अपैना च प्रतिबद्ध-प्रसरा।

५। तेषामिति। तेषां रिपूणाम् संहारपराभवप्रसिद्धये संहारस्य पराभवस्य तयोः प्रसिद्धये सम्यक् सिद्धये ततः अपरिच्छेदी निरन्तरः दृढतरः यमः अनुष्ठेयः।

निरन्तरप्रार्थनात्मसन्धानेषु नियोजयेत् ।
हृदयं परिहासादिव्यापारात् विनिवर्त्तयेत् ॥ ६ ॥
प्रस्तुते हृदये तेन प्रभुणा प्रेरिते पुनः ।
व्रतग्रहणहेतोः स दिवसन्त्ववधारयेत् ॥ ७ ॥
प्रातः पापानुतप्तोऽयं जनश्रुतिबहिःस्थितः ।
प्रभोः समीपे संक्रोशेद्गुप्तपापानि सर्व्वथा ॥
निवेदयेन्मलिनताहेतोः खिदं वहन् भृशम् ॥ ८ ॥
सत्यं सरलमस्याशु भवेद्यस्य जनस्य हि ।
भस्मान्यस्थीनि पापैश्च सन्दग्धं नरकाग्निना ॥
हृदयं सद्मं तेन विनतो धूलितां गतः ।
मुखप्रदर्शनायोग्यजनप्रायो नरेशयोः ॥ ९ ॥

६ । तज्जनितेति । तज्जनितापराधानां क्रोधादिनिमित्तापराधानां गुरुत्वं च अनुभूय सारल्यविनयावनतः सन् चिरं दीर्घकालं व्याप्य अनुतप्येत, हृदयं निरवच्छिन्नप्रार्थनात्मसन्धानेषु नियोजयेत् परिहासादिव्यापारात् विनिवर्त्तयेत् ।

७ । प्रस्तुतइति । हृदये प्रस्तुते तेन प्रभुणा पुनः प्रेरिते सति व्रतग्रहणहेतोः स व्रतार्थी दिवसं तु अवधारयेत् ।

८ । प्रातरिति । पापानुतप्तः अयं व्रतार्थी जनश्रुतिबहिःस्थितः जनश्रवणागोचरः प्रभोः समीपे संक्रोशेत् क्रन्देत् मलिनताहेतोः भृशं खेदं, वहन् गुप्तपापानि सर्व्वथा निवेदयेत् ।

९ । सत्यमिति । यस्य हि जनस्य पापैः अस्थीनि भस्मानि नरकाग्निना हृदयं सन्दग्धं तेन सद्मम् अस्य आशु सत्यं सरलं भवेत् ; नरेशयोः समीपे मुखप्रदर्शनायोग्यजनप्रायः विनतः धूलितां गतः अयं भवेदिति शेषः ।

प्रागुक्तेनैव विधिना ह्यभिषिकं समापयन्।
उपासनालये गच्छे प्रातर्योगं विधाय च ॥
तदुपासनयैको वा सोऽयं ना मण्डलीगतः।
उपक्रमेत प्रणतो ग्रहीतुं तद्व्रतं शुभम् ॥ १० ॥
सोऽयं ब्रुवीत करुणा प्रभोर्या निखिलं महत्।
पराभवति पापं सा सहायो मे भवा... ॥
सर्व्वेषाञ्च महर्षीणां पूतत्वं नित्यजीवनम्।
मम प्राप्तवतां पादरजांसि मूर्द्धि सन्तु ति ॥ ११ ॥
क्रोधं लोभमहङ्कारं कामं वा स्वार्थरागिताम्।
यमिच्छति पराजेतुं तन्नामोच्चार्य भर्त्सयेत् ॥
निराकुर्यात्तदा चैवं वीरत्वमनुवर्त्तयन्।
क्रोध त्वमविशुद्धं मे हृदयं कृतवानहो ॥
मां निरयोपमज्वालाखिसञ्चयः कालिमाञ्चितः।
शोणितज्वापरिशुद्धा पूर्णं निःश्वसितं मम ॥
दुर्गन्धोद्गारि पापेन त्वं ग्रशुरसि चात्मनः।
परेषाञ्च च रे पाप पिशाच प्रभुतां गतः ॥

१०। प्रागुक्तेनेति। प्रागुक्तेन पूर्व्वकथितेन एव विधिना हि अभिषेकं समापयन्, प्रातः गच्छे उपासनालये तदुपासनया योगं विधाय च सोऽयं ना मनुष्यः एकः असहायः एकाकीत्यर्थः, मण्डलीगतः वा प्रणतः सन् शुभं तद्व्रतं ग्रहीतुम् उपक्रमेत।

११। सोऽयमिति। प्रभोः या करुणा निखिलं महत् पापं पराभवति सा मे इह सहायः भवतु। पूतत्वं नित्यजीवनं प्राप्तवतां सर्व्वेषां च महर्षीणां पादरजांसि मम मूर्द्धि सन्तु इति सः अयं ब्रुवीत।

विभ्रंश्य त्वं विवेकं मे यदात्याचारसंरतः।
उत्पीड़यसि मां नित्यमशुचिन्ताभिरागतः॥
प्रार्थयामि यदप्यत्र न शान्तिर्न पवित्रता।
केवलं विषदिग्धानां पापानां निरयात्मनाम्॥
कृते तव ततस्त्वां भोः पवित्रपरमप्रभोः।
भक्तया विनाशयाम्यद्य पातयामि अवीत्ययम्॥
भवि परेशसंमुखं गच्छ रे मम पृष्ठतः।
दृढ़प्रतिज्ञया त्वाञ्च दूरे निष्कासयाम्यहम्॥
गच्छ त्वं क्रोध निरयानल मां स परः प्रभुः।
प्रतिरोद्धुं सम्मुखिन समरेण समाह्वयत्॥
त्वामद्य शासनं शेषं प्रापयामि जुगुप्सितम्।
सम्बन्धश्च तवास्मिन्ते पवित्रव्रतरूपिणाम्॥
वक्षस्यहं निःक्षिपामि स्वर्गीयबलजीवितः।
भीतः परस्य भावेन त्वां साक्षात्कृत्य सम्प्रति॥
विध्वस्तोभव विध्वस्तो यतो जीवेयमद्विमान्।
अद्यप्रभृति पुण्ये स्यां दिव्यधाम धरापि च॥
साक्ष्यदानं प्रकुर्व्वीत विजयस्य ममानिशम्।
दिव्याशिषोऽवतरन्तु निष्कृतस्य ममोपरि॥ १२॥

१२। क्रोधमिति। क्रोधं लोभम् अहङ्कारं स्वार्थरागितां कामं वा यं पराजेतुम् इच्छति, तन्नाम उच्चार्य भर्त्सयेत् वीरत्वम् अनुवर्त्तयन् तदा हि एवं निराकुर्य्यात्—अहो क्रोध, त्वं मे हृदयम् अविशुद्धं मां च निरयोपमं कृतवान्, पापेन त्वया अस्थिसञ्चय: कालिमाङ्कितः, शोणितं च अपरिशुद्धया पूर्व्वम्, निःश्वसितं मम दुर्गन्धोद्गारि। त्वम् आत्मनः परेशस्य च शत्रुः असि। रे पाप पिशाच त्वं विवेकं विभ्रंश्य मे प्रभुतां

अनेन प्रार्थनेनायं कुर्य्यात्स्व समापनम् ।
उद्धर्त्तः पापिनां त्वं मे सहायी भव चात्मनः ॥
तमाश्रयस्व च यच्छत्रं पदाब्जेतुं क्षमः प्रभो ।
भवेयं चिरकालाय न वियोगोऽस्य चानुचित् ॥
त्वत्कृपाकर्षितश्चेमं विनयं मम चात्मनि ।
कुरु नित्यजयश्चाव्यतमस्योपरि सर्व्वथा ॥
आलोकस्य जयश्चैव गौरवं सर्व्वमस्तु ते ।
जयो जयो जयो नित्यं पुण्यनाम्नस्तव प्रभो ॥ १३ ॥
इति रिपुसंहारस्तवम् ।

---

गतः, सदात्माचारसंरतः मां नित्यम् असच्चिन्ताभिः उत्तुपन यि,दयकृपाञ्च आनतः प्रार्थयामि, केवलं तव विषदिग्धानां निरयात्मनां बाणानां क्षते न शान्तिः न पवित्रता । भोः, त्वां ततः पवित्रपरमप्रभोः शक्त्या अद्य विनाशयामि पातयामि । मयि अधं परेशसूनुः ब्रवीति—'रे त्वम् मम पृष्ठतः गच्छ,' अहं त्वां दृढ़प्रतिज्ञया च दूरे निष्काशयामि । रे त्वं क्रोध निरयानल, गच्छ, मां च परः प्रभुः सन्तुष्टेन मत्सरेण त्वां प्रतियोद्धुं समादिशत् जुगुप्सितं तव शासनं सम्बन्धं च प्रेमं प्रापयामि । [illegible]जीवितः परस्य भावेन नीतः त्वां साक्षात्कृत्य वच्मि ते सम्प्रति पवित्रवृतरूपिणम् असिं निक्षिपामि । विश्वस्तः विश्वस्तः भव, यतः अद्यप्रभृति जीवेयम्, पुण्ये बुद्धिमान् स्याम् । दिव्यधाम धरा अपि च अग्निः मम विजयस्य साक्ष्यदानं प्रकुर्व्वीत, निष्कृतस्य मम उपरि दिव्याशिषः अवतरन्तु ।

१३ । अनेनेति । अनेन प्रार्थनेन अयम् आत्मा समापनं कुर्य्यात्—पापिनाम् उद्धर्त्तः, त्वं मे आत्मनः सहायः भव, तम् आश्रयस्व च, यतु प्रभो, अहं चिरकालाय पदाब्जेतुं क्षमः भवेयम् । आनुचित् अस्य वियोगः न [ भवेयम् ], त्वत्कृपाकर्षितं च इमं विनयं मम आत्मनि च अन्य-

चित्रसाधनव्रतम् ॥

चित्रैर्मर्ग्याघं बालेभ्यो बालिकाभ्यश्च चित्रयाम् ॥ १ ॥
तैः खलु हृदये तेषां धर्म्याणि नैतिकानि च ।
सत्यानि मुद्रितान्याशु भवन्ति उत्तमाः पुनः ॥
जागरितास्तथाभ्यस्ता भावाः सहजभावतः ॥ २ ॥
दशमे द्वादशे वर्षे चित्रसाधनकं व्रतम् ॥
गृह्णन्तु बालका बाला लभन्तां चित्रयां पुनः ।
चित्रयोगेन सप्ताहं विशेषप्रतिपत्तये ॥ ३ ॥
चित्राणि सहजानि स्युरालेपनकृतानि च ।
सिद्धानि साधनैरन्यैः शुक्लैर्वा गृहचत्वरे ॥ ४ ॥

तमसोपरि सर्व्वथा आलोकस्य नित्यजयं च कुरु, अत्र सर्व्वं गौरवम् अस्य वै भवतु । प्रभो, तव पुण्यनाम्नः नित्यं जयः जयः जयः ।

इति रिपुसंहारव्रतम् ।

———

१। संप्रति प्रथमं बालानां बालिकानाञ्च व्रतं वक्तुमुपक्रमते चित्रैरिति । चित्रैः बालेभ्यः बालिकाभ्यः च चित्रयां महार्घम् महामूल्याम्, अतीवमूल्यावत् ।

२। कथं मूल्यवत्तराह तैरिति । तैः चित्रैः तेषां हृदये खलु धर्म्याणि नैतिकानि च सत्यानि आशु मुद्रितानि अङ्कितानि ; सहजभावतः पुनः उत्तमाः भावाः जागरिताः तथा अभ्यस्ताः भवन्ति ।

३। दशम इति । दशमे द्वादशे वर्षे तद्वयसि बालकाः बालाः चित्रसाधनकं व्रतं गृह्णन्तु, विशेषप्रतिपत्तये चित्रयोगेन पुनः सप्ताहं चित्रयां लभन्ताम् ।

४। चित्राणीति । आलेपनकृतानि अन्यैः वा शुक्लैः साधनैः कठिन्यादिभिः गृहचत्वरे सिद्धानि चित्राणि सहजानि स्युः ।

माता वा ज्येष्ठया वान्यपुरन्ध्र्या साधितानि च ।
पराह्णे तानि नित्यं स्युस्तज्जातप्रियया सह ॥ ५ ॥
प्रियाग्रहणमेकत्र स्याद्वा तत्र पृथक् पृथक् ॥ ६ ॥
नवीनं वसनं माल्यं धारयेयुर्दिनेऽग्रिमे ॥ ७ ॥
उपासनागृहे माला नीताः स्युस्ते परं प्रभुम् ।
भूमिसंलग्नग्रीवया प्रणमेयुः ससम्भ्रमम् ॥ ८ ॥
नीताः साधनभूमौ चारभेरन्नेवमेव हि ॥ ९ ॥
सर्व्वे सम्मिलिता ब्रूयुरस्तु भो गौरवं महत् ।
बालानामीश्वरायास्मै बालप्रियाय चाश्वतम् ।
दिव्याय पित्रे मात्रे च यच्छामो गौरवं वयम् ॥ १० ॥
सत्याय मङ्गलायैतद्भवेन्मे व्रतमुत्तमम् ।
मामाधास्तां परस्तस्यापत्यमिति वदिद्वती ॥ ११ ॥

५। मातेति। नित्यं पराह्णे तज्जातप्रियया चिरप्रचलितप्रियया सह तानि चित्राणि माता वा ज्येष्ठया भगिन्या वा अन्यपुरन्ध्र्या पुरस्त्रिया, वा साधितानि च स्युरिति शेषः।

६। प्रियेति। तत्र प्रियाग्रहणम् एकत्र पृथक् पृथक् वा स्यात्।

७। नवीनमिति। अग्रिमे दिने नवीनं वसनं माल्यं धारयेयुः, बाला बालिकाश्चेति शेषः।

८। उपासनेति। ते बाला बालकाश्च माला उपासनागृहे नीताः स्युः, ससम्भ्रमं परं प्रभुं परमेश्वरं भूमिसंलग्नग्रीवया प्रणमेयुः।

९। नीताइति। माला साधनभूमौ नीताः एवम् एव हि आरभेरन् च साधनमिति शेषः।

१०। सर्व्वइति। सर्व्वे सम्मिलिताः ब्रूयुः बालप्रियाय अस्मै बालानाम् ईश्वराय भोः शाश्वतं महत् गौरवम् अस्तु। दिव्याय स्वर्गीयाय पित्रे मात्रे च वयं गौरवं यच्छामः।

११। सत्यामेति। मे मम सत्याय मङ्गलाय उत्तमम् एतत् व्रतं

एकाङ्कं चित्रयेन्माता प्रथमं स व्रती ततः।
पुष्पाणि स्थापयेत्तस्योपरि ब्रूयात् परेश्वरः॥
एको विश्वास एकश्च परिवारस्तथा पुनः।
शास्त्रमेकं परित्राणमेकमित्यतिमोदतः॥ १२॥
ध्वजं नवविधानस्य द्वितीयं चित्रमालिखेत्।
पुष्पाणि विकिरेदुक्त्वा नवीनस्य विधेर्जयम्॥ १३॥
चतुरोऽस्या महाद्वीपान् पृथ्व्याश्चित्रं तृतीयकम्।
दर्शयद्विलिखेच्छान्तिः शुभेच्छा धरणीतले।
ऐक्यश्चास्तु चतुर्ष्वेव द्वीपेष्विति वदेन्मुदा॥ १४॥
ततश्चान्यानि चित्राणि व्रतार्थी ह्यनुवर्त्तयन्।
पुष्पाण्यवाकिरन्नेवं ब्रूयात्तत्र यथाक्रमम्॥ १५॥
धनाधारं प्रति ब्रूयात् धनात्सत्यं हि मूल्यवत्॥ १६॥

भवेत्। परः परमेश्वरः मां तस्य अपत्यम् आज्ञाकु इति व्रती वदेत्।

१२। एकाङ्कमिति। प्रथमं माता एकाङ्कं चित्रयेत्; ततः स व्रती तस्योपरि पुष्पाणि स्थापयेत्। परेश्वरः एकः, विश्वासः च एकः, तथा परिवारः एकः, एकं पुनः शास्त्रम्, एकं परित्राणम् इति अतिमोदितः सन् ब्रूयात्।

१३। ध्वजमिति। ध्वजं नवविधानस्य द्वितीयं चित्रम् आलिखेत् सा चेति शेषः। नवीनस्य विधेः जयम् उक्त्वा पुष्पाणि विकिरेत् स व्रतीति शेषः, एवं सर्व्वत्र।

१४। चतुर इति। चतुरो महाद्वीपान् दर्शयत् अस्याः पृथ्व्याः तृतीयकं चित्रं लिखेत्। धरणीतले शान्तिः शुभेच्छा, चतुर्षु द्वीपेषु च ऐक्यम् अस्तु इति मुदा वदेत्।

१५। तत इति। ततः व्रतार्थी अन्यानि चित्राणि च अनुवर्त्तयन्, पुष्पाणि अवाकिरन् तत्र चित्रेषु यथाक्रमम् एवं ब्रूयात्।

१६। धनेति। धनाधारं प्रति ब्रूयात्—धनात् सत्यं हि मूल्यवत्।

सूर्य्यं चन्द्रं प्रति ब्रूयात् साधुत्वं मम चोज्ज्वलम् ।
अस्तु सूर्य्यसमं प्रेमा शशीवार्द्रतरो मम ॥ १७ ॥
सरितं वीक्ष्य स ब्रूयात् वहत्वेतत्तु जीवनम् ।
दत्त्वा जनसहस्राय नित्यं जीवनजीवनम् ।
सौभाग्यञ्चाथ प्राचुर्य्यं सर्व्वतो विकिरन्महत् ॥ १८ ॥
वीक्ष्य चन्दनवृक्षञ्च गन्धसारमयं पुनः ।
ददानि च्छेदकं शत्रुं प्रति सद्गन्धमेकलम् ॥ १९ ॥
पर्व्वतं वीक्ष्य विश्वासः शिलोच्चयसमो मम ।
दृढ़ो भवतु वृत्तं मे निश्चलत्वे हिमालयः ॥ २० ॥
सा चेद्बालाधिकान्यत्र चित्राण्येतानि सन्तु च ॥ २१ ॥
ब्रूयाद्धारं समीक्ष्यैषा कण्ठं भूषयते यथा ।
हारः सतीत्वं भूयान्मे मुक्ताहारः समहिमान् ॥ २२ ॥
कङ्कणं वीक्ष्य भूयान्मे दानं हीरककङ्कणम् ॥ २३ ॥

१७। सूर्य्यमिति। सूर्य्यं चन्द्रं प्रति ब्रूयात्—मम साधुत्वं सूर्य्यसमम् उज्ज्वलम् अस्तु, मम प्रेमा शशी इव आर्द्रतरः।

१८। सरितमिति। स व्रतार्थी सरितं वीक्ष्य ब्रूयात्—मम एतत् जीवनम् जनसहस्राय नित्यं जीवनजीवनं जीवनवारि दत्त्वा सौभाग्यञ्च अथ महत् प्राचुर्य्यं सर्व्वतो विकिरत् वहतु।

१९। वीक्ष्येति। चन्दनवृक्षञ्च वीक्ष्य—गन्धसारमयं चन्दनतरुसमं पुनः छेदकं शत्रुं प्रति एकलं सद्गन्धं ददानि।

२०। पर्व्वतमिति। पर्व्वतं वीक्ष्य—शिलोच्चयसमः मम विश्वासः दृढः भवतु, मे मम वृत्तं निश्चलत्वे हिमालयः भवत्विति शेषः।

२१। सेति। सा व्रतार्थिनी बाला चेत् अत्र एतानि अधिकानि चित्राणि सन्तु च।

२२। हार इति। एषा बाला हारं समीक्ष्य ब्रूयात्—यथा हारः कण्ठं भूषयति, तथा सतीत्वं मे समहिमान् मुक्ताहारः भूयात्।

२३। कङ्कणमिति। कङ्कणं वीक्ष्य—दानं मे मम हीरककङ्कणं भूयात्।

अवगुण्ठनमालोक्य भूयाद्वीरवगुण्ठनम् ॥ २४ ॥
नमस्कृत्य ततो ब्रूयात् व्रतं ह्येतन्महत्तमम्।
इदं करोतु फलवत् प्रभुरस्माकमीश्वरः ॥ २५ ॥
ततश्चित्राणि धौतानि कुर्व्वीतैवं पुनः पुनः।
सप्ताहं विलिखेद्भूमौ ब्रूयुश्चैवं व्रतार्थिनः ॥ २६ ॥
शान्तिः शान्तिः शान्तिरिति ब्रूयादन्तेऽन्तिमे दिने ॥२७॥
भोजयेत् स तु बन्धूंश्च तथा तत्सहयोगिनः।
पतत्त्रिपशुकीटेभ्यो दद्याद्भोजनवस्तु च ॥ २८ ॥

इति चित्रसाधनव्रतम्।

---

२४। अवगुण्ठनमिति। अवगुण्ठनमालोक्य—स्त्रीः मे अवगुण्ठनं भूयात्।

२५। नमस्कृत्येति। व्रतार्थी ततः नमस्कृत्य ब्रूयात्—एतत् हि व्रतं महत्तमम्। अस्माकं प्रभुः ईश्वरः इदं व्रतं फलवत् करोतु।

२६। तत इति। ततः अनुष्ठानानन्तरं चित्राणि धौतानि कुर्व्वीत। एवं पुनः पुनः सप्ताहं चित्राणि भूमौ विलिखेत्, व्रतार्थिनः च एवं ब्रूयुः।

२७। शान्तिरिति। अन्तिमे दिने अस्मिन् व्रतान्ते शान्तिः शान्तिः शान्तिः इति व्रतार्थी ब्रूयात्।

२८। भोजयेदिति। बन्धून् च तथा सहयोगिनः स व्रतार्थी भोजयेत्, पतत्त्रिपशुकीटेभ्यो भोजनवस्तु च दद्यात्।

इति चित्रसाधनव्रतम्।

# आध्यात्मिकोद्वाहः ।

परात्मना पतिः पत्नी सख्ये पुण्यतमे यदा ।
आहूतौ प्रेरितौ दिव्ये राज्ये परिणयं पुनः ॥
साधयितुं निदेशानुगामिनावविलम्बितौ ।
आयोजनानि तौ कुर्व्वीयातां संहृष्टमानसौ ॥ १ ॥
यदोदवहतां पूर्व्वमसम्पूर्णेन चांशतः ।
आसीत्तद्बन्धनं तस्मात् पूर्णं भवतु सम्प्रति ॥ २ ॥
सखित्वमेतयोरासील्लोकेऽस्मिन्नधुना पुनः ।
भविता तच्चिरस्थायि दिव्यधाम्नि सुखालये ॥ ३ ॥
किमर्थोऽयं विवाहो वा भोगासक्तोऽस्य चोत्तरे ।
ब्रूते सन्तानजननहेतोः संवर्द्धनाय च ।
पार्थिवस्य सुखस्यात्र लाभाय च तयोः पुनः ॥ ४ ॥
न तथा संहिता दिव्या ब्रूते पत्नीं पतिं पुनः ।
स्वर्गराज्यार्थमेवात्र विनेतुं स विधिः स्मृतः ॥ ५ ॥

१ । सम्प्रत्याध्यात्मिकोद्वाहं प्रबन्धमुपक्रमते परात्मनेति । पतिः पत्नी च यदा पुण्यतमे सख्ये परात्मना आहूतौ प्रेरितौ, अविलम्बितौ निदेशानुगामिनौ तौ दिव्ये राज्ये पुनः परिणयं साधयितुं संहृष्टमनसौ सन्तौ आयोजनानि कुर्व्वीयाताम् ।

२ । यदेति । पूर्व्वं यदा तौ उदवहतां, तद्बन्धनम् असम्पूर्णेन अंशतश्च आसीत् । तस्मात् सम्प्रति पूर्णं भवतु ।

३ । सखित्वमिति । अस्मिन् लोके एतयोः सखित्वम् आसीत्, अधुना पुनः तत् सुखालये दिव्यधाम्नि चिरस्थायि भविता ।

४ । किमर्थ इति । किमर्थः वा अयं विवाहः ? अस्य चोत्तरे भोगासक्तः ब्रूते—सन्तानजननहेतोः, पार्थिवस्य सुखस्य च वर्द्धनाय, अत्र पुनः तयोः लाभाय च ।

५ । नेति । न तथा दिव्या संहिता ब्रूते । स विधिः विवाहविधिः पतिं पत्नीं पुनः अत्र स्वर्गराज्यार्थम् एव विनेतुं स्मृतः ।

विवाहितौ पुनस्तस्माद्विवहेतां परस्परम्।
सख्यं पार्थिवमेवं यद्दिव्यमाध्यात्मिकं भवेत् ॥ ६ ॥
आध्यात्मिकविवाहस्य योग्यः कालोऽत्र सम्मतः।
चत्वारिंशं समारभ्य यावत्पञ्चाशवत्सरम् ॥ ७ ॥
औह्यन्त भारा जीवनस्यापाद्यन्त च तानि च।
प्रधानानि च कर्त्तव्यान्यावासः शृङ्खलायितः ॥
अन्वभूयत संसारस्यानन्दः शोक एव च।
दाम्पत्यं पार्थिवञ्चोपाभुज्यतातिप्रमाणतः ॥ ८ ॥
अधिकारं चिन्तयेतामात्मनोरौपयामिकम्।
कर्त्तव्यानि च हर्षांश्च शाश्वतानिह सम्प्रति ॥ ९ ॥
ध्यानेऽध्ययने चात्मानुसन्धाने संयमे समम्।
युञ्ज्येत प्रार्थने ताभ्यां प्रास्तुतं दिवसत्रयम् ॥ १० ॥

६। विवाहिताविति। तस्मात् विवाहितौ पुनः परस्परं विवहेताम्, यत् एवं पार्थिवं सख्यं दिव्यम् आध्यात्मिकं भवेत्।

७। चत्वारिंशमिति। चत्वारिंशं समारभ्य पञ्चाशवत्सरं यावत् अत्र आध्यात्मिकविवाहस्य योग्यः कालः सम्मतः।

८। औह्यन्तेति। जीवनस्य भाराः औह्यन्त, तानि प्रधानानि च कर्त्तव्यानि आपाद्यन्त, आवासः शृङ्खलायितः, संसारस्य आनन्दः शोकः एव च अन्वभूयत, पार्थिवं दाम्पत्यञ्च अतिप्रमाणतः उपाभुज्यत।

९। अधिकारमिति। सम्प्रति इह आत्मनोः औपयामिकम् अधिकारं कर्त्तव्यानि शाश्वतान् हर्षान् च चिन्तयेताम्।

१०। ध्यान इति। ध्याने अध्ययने आत्मानुसन्धाने संयमे समम् एकत्र प्रार्थने च तत् प्रास्तुतिकदिनत्रयं ताभ्यां युञ्ज्येत।

चतुर्थे दिवसे चाभिषेकान्ते वसनन्तु तौ ।
बिभ्राणौ गैरिकं नूत्नं कुर्व्वीयातां ह्युपासनाम् ॥ ११ ॥
उपासनान्तरे नित्योपासनायाः समापने ।
सम्मुखीनावुपविष्टौ नूतनासनयोस्तदा ॥ १२ ॥
पतिर्ब्रूयात् स पत्नीञ्चावयोर्वां सम्मिलिताविह ।
समाधातुं प्रभोरग्रे दिव्यधाम्नि पुरोधसः ॥
अमराणाञ्च साचित्वेनोद्वाहं दिव्यमावयोः ।
प्रभुर्धन्य इति सा च ॐ तथास्त्विति साम्तिमम् ॥ १३।१४॥
संसारस्यास्य बहुलाः परीक्षा विपदः पुनः ।
शोकञ्चानन्दमाभोग्यं भुक्तवन्तौ परिश्रमम् ॥
ज्ञातवन्तावुभे दुःखं सुखं जीवनवर्त्मनि ।
सदानुभूतवन्तौ च हृदयेन करेण च ॥
प्रभुं सेवितवन्तौ च दासदासीसमौ पुनः ।
अधुना प्रभुरावां स सेवानन्दोच्चसंस्तुतौ ॥
समाह्वयति चोद्वाहं प्रापयितुन्तु पूर्णताम् ।
दिव्यत्वसौ विदेहात्मनित्यसम्मिलनेन च ॥
पुण्यव्रतग्रहेणाद्य दम्पत्योरात्मरूपिणोः ।
भवितारौ पुण्यराज्ये तस्य दासौ चिरन्तनौ ॥

११ । चतुर्थ इति । चतुर्थे दिवसे च अभिषेकान्ते तौ दम्पती गैरिकं नूत्नं वसनन्तु बिभ्राणौ उपासनां हि कुर्व्वीयाताम् ।

१२ । उपासनेति । उपासनान्तरे नित्योपासनायाः समापने तदा नूतनासनयोः सम्मुखीनौ उपविष्टौ भवेतामिति शेषः ।

१३।१४ । पतिरिति । अद्य आवां पुरोधसः प्रभोः अग्रे अमराणां साचित्वेन दिवि आवयोः दिव्यम् उत्तमम् उद्वाहं समापयितुं सम्मिलितौ ; प्रभुः धन्यः इति पतिः पत्नीञ्च ब्रुवीत । सा च पत्नी—ओँ तथा अस्तु इति साम्तिमं प्रभुर्धन्य इति ।

एकस्मिन् त्रितयं यत्र योगेनोत्तमेन हि ।
किमस्मिन् प्रस्तुतासि त्वं व्रते गुरुतरे प्रिये ॥ १५ ॥
प्रस्तुतास्मि प्रभोराज्ञां शीर्षे धारयितुं पुनः ।
दुर्बलाहं गुरुतरं व्रतं सोऽस्तु सहायकः ॥ १६ ॥
शक्तिमान् स प्रभुर्नित्यमावयोरात्मनोरिह ।
सहायोऽस्तु बलं तेज आलोकं विदधातु सोम् ॥ १७।१८ ॥
सप्ताहन्तु विनिर्दिष्टं व्रतं गुरुतमस्त्विदम् ।
नूत्नं द्रढयितुं ग्रन्थिं सप्ताहमिदमुत्तमम् ॥
प्रार्थिभावेन विश्वस्तत्वेनातोऽतिविनयेन च ।
सम्पादयावार्पणेन, सा तथास्त्विति भाषते ॥ १९।२० ॥

१५ । संसारस्येति । संसारस्य परीक्षाः विपदः भ्रमम् अनुभूताः, आभीरयोः शोकम् आनन्दञ्च भुक्तवन्तौ, परिश्रमं कृतवन्तौ, उभे जीवनवर्त्मनि सुखं दुःखं सदा अनुभूतवन्तौ च, हृदयेन करेण च दासदासीसमौ पुनः प्रभुं सेवितवन्तौ, अधुना स प्रभुः सेवानन्दोपसंस्कृतौ समाह्वयति, उद्वाहं पूर्णतां प्रापयितुं विदेहात्मनित्यसम्मिलनेन आत्मार्पिण्योः दम्पत्योः पुण्यव्रतग्रहणाय च असौ दिशति । तस्य पुण्यराज्ये चिरन्तनौ दासौ भवितारौ, यत्र उत्तमेन हि योगेन एकस्मिन् त्रितयम् । प्रिये, गुरुतरे अस्मिन् व्रते किं त्वं प्रस्तुता असि ।

१६ । प्रस्तुतेति । प्रभोः आज्ञां पुनः शीर्षे धारयितुं प्रस्तुता अस्मि, अहं दुर्बला, व्रतं गुरुतरम्, सः सहायकः अस्तु ।

१७।१८ । शक्तिमानिति । शक्तिमान् सः प्रभुः नित्यम् इह आवयोः आत्मनोः सहायः अस्तु, बलं तेजः आलोकं विदधातु । सा पत्नी—ओम् ।

१९।२० । सप्ताहमिति । इदं गुरुतमं गम्भीरं व्रतम् सम्पादयितुम्, नूत्नं वैवाहिकं ग्रन्थिं पुनः द्रढयितुं सप्ताहन्तु विनिर्दिष्टम् । अतः सप्ताहम् इदम् उत्तमं व्रतं प्रार्थिभावेन विश्वस्तत्वेन अतिविनयेन अर्पणेन च सम्पादयाव । सा पत्नी भाषते—तथा अस्तु इति ।

देहि दक्षकरं मह्यं कन्ये दासि परीक्षितुः।
पुष्पमाल्येन बध्नामि प्रेमग्रन्थिन्तु शाश्वतम्।
आत्मयोगस्य लक्ष्मेव करयोः सा तथास्त्विति ॥ २१।२२ ॥
प्रेमग्रन्थिरयं चेत् स्यात् सत्यात्मबन्धनन्तदा।
अस्येह नित्ययोगस्य भित्तिभूमिः समर्पिता ॥
कालेऽस्यावां विवहावो नित्यकालाय तु प्रिये।
भूमौ सम्मिलितावद्य द्रष्टारौ तत्पुनर्दिवि ॥ २३ ॥
आशां बिभर्म्मि विश्वासं कुर्म्मेवं तत्तथास्त्विति ॥ २४ ॥
गृहाण गैरिकं वस्त्रमेकतन्त्रीं तथासनम्।
श्लोकानां सङ्ग्रहञ्चेममङ्गे त्वं सहगामिनि ॥
ध्वजं नवविधानस्य विश्वस्ता राजभक्तितः।
प्रणताऽस्मै चिरं भूयाः, गृह्णामि श्रद्धयेति सा ॥२५।२६॥
विज्ञेय एष आदेशः प्रभोर्यद्धृदयं करम्।
आवां विशुद्धं रक्षावः क्रोधं गर्व्वञ्च भोगिताम् ॥

२१।२२। देहीति। हे परीक्षितुः कन्ये दासि, दक्षकरं मह्यं देहि, आत्मयोगस्य लक्ष्म इव करयोः शाश्वतं प्रेमग्रन्थिम् पुष्पमाल्येन बध्नामि। सा पत्नी—तथा अस्तु इति।

२३। प्रेमग्रन्थिरिति। चेत् अयं प्रेमग्रन्थिः सत्यात्मबन्धनं स्यात्, तदा इह अस्य नित्ययोगस्य भित्तिभूमिः समर्पिता। अद्य, प्रिये, आवां नित्यकालाय तु विवहावः। अद्य भूमौ सम्मिलितौ, तत् पुनः दिवि द्रष्टारौ।

२४। पत्नी प्रत्युत्तरयति आशामिति। आशां बिभर्मि एवं विश्वासं कुर्मि करोमि तथा अस्तु इति पत्नी भाषते इति शेषः।

२५।२६। गृहाणेति। अयि सहगामिनि, त्वं गैरिकं वस्त्रम्, एकतन्त्रीम्, आसनम्, तथा इमं श्लोकानां संग्रहं नवविधानस्य ध्वजञ्च गृहाण। विश्वस्ता अस्मै राजभक्तितः चिरं प्रणता भूयाः। सा पत्नी—श्रद्धया गृह्णामि इति भाषते इति शेषः।

संसारासक्तिं जह्िवो भवावो वर्द्धितौ पुनः।
विश्वासे साधुतायाञ्च प्रेम्णि भक्तावकिञ्चनौ ॥
दीनाय दानं यच्छाव: शमयावोऽस्य यन्त्रणाम्।
प्रार्थनाध्ययनध्यानालापसहितैर्यैरिह ॥
सहसाधकवत्तस्मिन् प्रविशाव: क्रमादहो।
आवाभ्यामीश्वरेणाद्य योगे यः पूर्णता पुन: ॥
भक्तेः सर्व्वविधायाश्च निखिलस्य सुखस्य च।
आशास्तां मेलनं पुण्यं करोतु सुखितं परः ॥ २७ ॥
ओमित्युक्त्वा ततः साध्वी चानुमन्येत तद्वचः ॥ २८ ॥
पतिरेवं प्रार्थयेत—योगेश योगबन्धनैः।
आत्मानौ नौ बधानाथ पत्न्यामसानि सा तथा ॥
मयि चोभे त्वयि प्राप्तौ शान्तिमैक्यं चिरन्तनम्।
पवित्रौ कुरु नौ रक्ष चाविशुद्धेरमङ्गलात् ॥
संसारादुद्धर त्वं नौ लोके ज्योतिर्म्मये प्रभो।
मधुरेण च योगेन पूर्णानन्देन सङ्गतौ ॥ २९ ॥

२७। विश्वेय इति। प्रभो: एष आदेश: विश्वेय: यत् आवां हृदयं करं विशुद्धं रक्षाव:, क्रोधं गर्व्वं भोगितां संसारासक्तिञ्च जह्िव:, विश्वासे साधुतायां प्रेम्णि भक्तौ च पुन: वर्द्धितौ भवाव:, अकिञ्चनौ दीनाय दानं यच्छाव:, अस्य यन्त्रणां शमयाव:। अहो आवाभ्याम् ईश्वरेण च तस्मिन् योगे सहसाधकवत् क्रमात् प्रविशाव:, य: पुन: सर्व्वविधाया: भक्ते: निखिलस्य सुखस्य च पूर्णता। पर: पुण्यं मेलनम् आशास्ताम्, सुखितं करोतु।

२८। ओमिति। ततः साध्वी च ओम् इति उक्त्वा तत् वच: अनुमन्येत।

२९। पतिरिति। एवं पति: प्रार्थयेत—हे योगेश, योगबन्धनै: नौ आत्मानौ बधान, अथ पत्न्याम् असानि, सा तथा मयि (अस्तु), चिरन्तनम् ऐक्यं शान्तिं प्राप्तौ उभे च त्वयि (स्याम्)। कुरु नौ पवित्रौ, रक्ष च अविशुद्धे: अमङ्गलात्, मधुरेण योगेन पूर्णानन्देन च सङ्गतौ नौ, प्रभो, संसारात् ज्योतिर्म्मये लोके उद्धर।

ततः पतिश्च पत्नी च प्रणमेद्भक्तिभावतः ।
प्रोच्य धन्यश्चिरानन्द आत्मनोर्नौ परोऽस्त्विति ॥ ३० ॥

शान्तिः शान्तिः शान्तिः ।

समाहन्तु पतिः पत्नी चैकतन्त्वा परप्रभोः ।
गायेतां पुण्यनामानि योगाभ्यासरतौ पुनः ॥
प्रार्थयेतां प्रतिदिनं पठेतां पावनीः श्रुतीः ।
आलपेतां सुगम्भीराध्यात्मसद्विषयेषु च ॥
यच्छेतां दानमागारसत्त्वांस्तान् शयनं पुनः ।
आश्रयेतां शकुन्तांश्च सिञ्चेतां पादपांस्तथा ॥
नूतनानि च पुष्पाणि चिनुयातां परा च ।
एकैकशः खादयेतां सेवेयातां दिनं दिनम् ।
दद्यातां मङ्गलौत्सेक्षानुपहारांश्च शोभनान् ॥ ३१ ॥

इत्यध्यात्मोद्वाहः ।

---

३० । तत इति । ततः पतिः च पत्नी च आत्मनोः नौ चि न्दः परः धन्यः अस्तु इति प्रोच्य भक्तिभावतः प्रणमेत् ।

शान्तिः शान्तिः शान्तिः ।

३१ । समाहन्निति । पतिः पत्नी च समाहन्तु योगाभ्यासरतौ परप्रभोः पुण्यनामानि एकतन्त्वा गायेतां, प्रार्थयेतां पुनः । प्रतिदिनं पावनीः श्रुतीः पठेतां, सुगम्भीराध्यात्मसद्विषयेषु च आलपेताम् । दानं यच्छेताम्, तान् हि पुनः अगारसत्त्वान् शकुन्तान् च शयनम् आश्रयेताम्, तथा पादपान् सिञ्चेताम्, पराय परमेश्वराय च नूतनानि पुष्पाणि चिनुयाताम् । दिनं दिनं मङ्गलौत्सेक्षान् च एकैकशः खादयेतां सेवेयाताम् । शोभनान् उपहारान् च यच्छेतां तेभ्य इति शेषः ।

इत्यध्यात्मोद्वाहः ।

---

# कौमारव्रतम् ।

व्रतार्थी प्रार्थयन्नेवं प्रतिजानीत सम्भ्रमात् ॥ १ ॥

शक्तिमन्नीश्वरेहास्मि त्वदाह्वानेन चागतः ।
त्वत्सन्निधौ ग्रहीतुं तद्व्रतं कौमारकं प्रभो ॥
तवेच्छानुग्रहेणैव दीक्षितो दारकर्म्मणि ।
भयेयं खलु रक्षेयं दूरे मां नित्यमेव हि ॥
बहेमतः परीक्षातो भोगादस्य प्रलोभनात् ।
संसारस्य जीवनं मे समग्रं तव कर्म्मणि ॥
अर्पयामीति सर्व्वा मे दैहिकीर्वासनास्तथा ।
सांसारिकीः प्रवृत्तीश्च बलिं कृत्वा तवान्तिके ॥
तवाज्ञामनुगच्छामि समग्रेण हृदा विभो ।
अमुके दिवसे मासि वर्षेऽस्य तव सन्निधौ ॥
पवित्रे परिगृह्णामि साक्षित्वेन व्रतन्त्विदम् ।
सत्यस्य ननु कौमारं प्रतिजानीय रक्षितुम् ॥
भावेनातिगभीरेण नियमानस्य नित्यदा ।
यावज्जीवं हि सङ्कस्याव्यभिचारानले पुनः ॥
पुष्पेऽस्य दैहिकान् सांसारिकानैन्द्रियकानिह ।
सर्व्वान् दहामि भावांश्चात्मानं शुद्धं समर्पये ॥
हितैषणायै देशस्य दानायोपासनाय च ।
अनुग्रहो मुक्तिदस्ते मां रक्षतु सदा प्रभो ॥
वर्त्मन्यव्यभिचारस्य ऋजौ त्रायस्व मां सदा ।
हावकुहकजालेभ्यः स्त्रीसंसृत्योश्चिरं यतः ॥

१ । कौमारव्रतमाह व्रतार्थीति । व्रतार्थी एवं सम्भ्रमात् प्रार्थयन् प्रतिजानीत ।

सत्यस्य मम पुण्यस्य पताकां प्रति चान्वहम् ।
राजभक्तिं वहेयं ते विवहन्तु विवाहिताः ॥
भवन्त्वन्येऽत्र रक्षामि विशेषन्ते निदेशनम् ।
शाश्वतं गौरवञ्चास्तु तव नाम्नो महत्तमम् ॥ २ ॥

इति कौमारव्रतम् ।

---

२। प्रार्थनामाह शक्तिमन्निति। हे शक्तिमन् ईश्वर, त्वदाज्ञानेन त्वत्सन्निधौ कौमारकं तत् व्रतं ग्रहीतुम् इह च आगतः अस्मि। दारकर्म्मणि न दीक्षितः भवेयम्, नित्यम् एव हि मां खलु अस्य संसारस्य उद्वेगतः, परीक्षातः भोगात् प्रलोभनात् दूरं रक्षेयम्, तत् मे समग्रं जीवनं तव कर्म्मणि अर्पयामि इति चेत् तव इच्छा अनुग्रहः च, सर्व्वाः मे दैहिकीः वासनाः तथा सांसारिकीः प्रवृत्तीः च तव अग्निके बलिं कृत्वा, हे विभो, समग्रेण हृदा तव आज्ञाम् अनुगच्छामि। अमुके दिवसे, अमुके मासि, अमुके वर्षे अद्य तव पवित्रे सन्निधौ सत्यस्य साक्षित्वेन इदं कौमारं व्रतम् परिगृह्णामि, अतिगभीरेण भावेन यावज्जीवं हि अस्य सत्यस्य नियमान् नित्यदा सुरक्षितुं प्रतिजानीय। पुण्यं अव्यभिचारात्मकं पुनः अद्य इह दैहिकान् सांसारिकान् ऐन्द्रियकान् सर्व्वान् भावान् दहामि; शुद्धम् आत्मानञ्च देशस्य हितैषणायै दानाय उपासनाय च समर्पये। प्रभो, शक्तिदः ते अनुग्रहः सदा माम् अव्यभिचारस्य पथो वर्त्मनि रक्षतु। मां चिरं [illegible] हावकुहकजालेभ्यः त्रायस्व, यतः पुण्यस्य मम सत्यस्य पताकां प्रति च अन्वहम् राजभक्तिं वहेयम्। अन्ये ते विवहन्तु विवाहिताः भवन्तु, विशेषं ते निदेशनम् अत्र अहं रक्षामि। तव नाम्नः महत्तमं शाश्वतञ्च गौरवम् अस्तु।

इति कौमारव्रतम् ।

---

# वैधव्यव्रतम् ।

असहाया परित्यक्ता सान्त्वनासुखवर्ज्जिता ।
विधवा दुःखिनीयं ते चरणे पतिता पितः ॥
करुणामय शान्तिञ्च शुद्धिमन्विष्यतीह ते ।
अनुग्रहात् पतिर्यातो लोके श्रेष्ठतमे मम ॥
तस्मिन् विभो विनष्टानि सर्व्वाणि चैहिकानि मे ।
सम्यक्सहायहीनाहं शरणं यामि ते प्रभो ।
आशानिबद्धहृदया त्वयि दीनदशां गता ॥
विधवायाः सुहृत्तस्याः पते त्वत्सन्निधावहम् ।
ग्रहीतुं व्रतमायामि निर्द्दिष्टं मे त्वया हि यत् ॥
पतिर्मम गतो नाथ लोकादस्मात् सुखं स तु ।
लोके श्रेष्ठतमे भूतिं प्राप्नोत्वानन्दसञ्चयम् ॥
त्वयि नित्यञ्च पत्नी च तस्याहं वाञ्छतो यदि ।
विच्छिन्नात्मनि संयुक्ता वसानि शाश्वतीः समाः ॥
कृपां कुरु प्रभो यस्त्वां पतिं सत्यं विजानती ।
विश्वस्तताञ्च प्रेमाणं तुभ्यं सर्व्वं समर्पये ॥
कुरु मां तव नित्याय कालाय परमप्रभो ।
अमुके दिवसे मासि वर्षेऽद्य तव सन्निधौ ॥
पवित्रे परिगृह्णामि व्रतं वैधव्यसम्मतम् ।
नाहं पुनर्विवहामि द्वितीयं जातु नो पतिम् ॥
स्वीकरोमि मङ्गलेदं जीवनं मम सम्प्रति ।
विधवाया भवत्वेव चिरं भोगादिवर्ज्जितम् ॥

आत्मत्यागि दैहिकाभिलाषहीनं क्षमान्वितम् ।
प्रशान्तं ध्यानशीलञ्च विनीतं नितरां पुनः ॥
उपासनाप्रधानञ्च प्रभो त्वत्सेवने रतम् ।
एवं मे जीवनं भूयात्तवानुकम्पया शुभम् ॥
आशिषे मम चान्येषां गौरवं महदस्तु भोः ।
अस्या मच्छ्वश्र्वा भूयाया: परेशाय प्रियाय मे ॥ १ ॥

इति वैधव्यव्रतम् ।

---

१। वैधव्यव्रतमाह आत्मत्यागीति। असहाया परित्यक्ता सान्त्वनासुखवर्ज्जिता इयं दुःखिनी विधवा, पितः करुणामय, चरणे ते पतिता ; इह ते अनुग्रहात् मुक्तिं शान्तिञ्च अन्विष्यति। मम पतिः श्रेष्ठतमे लोके यातः, तस्मिन् मे, विभो, ऐहिकानि सुखानि विनष्टानि। अस्मात् सहायहीना, प्रभो, दीनदशां गता अहं त्वयि आशाभिबद्धहृदया शरणं ते यामि। हे विधवायाः सुहृत् तस्याः पते, यत् व्रतं हि त्वया निर्दिष्टं तत् ग्रहीतुं त्वत्सन्निधौ अहम् आयामि। नाथ, मम पतिः अस्मात् लोकात् गतः, स तु श्रेष्ठतमे लोके भूतं नित्यं सुखम् आनन्दञ्चाक्षयं त्वयि प्राप्नोतु। तत्र अहं पत्नी यद्यपि बाह्यतः विच्छिन्ना, आन्तरी: समाः आत्मनि संयुक्ता वसामि। प्रभो, कृपां कुरु, यत् त्वां सत्यं पतिं विजानती विश्वस्ता सर्व्वं प्रमाणञ्च तुभ्यं समर्पये। परमप्रभो, नित्याय कान्ताय मां तव कुरु। अमुके दिवसे अमुके मासि अमुके वर्षे, अत्र पवित्रे तव सन्निधौ वैधव्यसम्बन्धं व्रतं परिगृह्णामि। न अहं पुनः विवक्ष्यामि, द्वितीयं पतिं जातु नो स्वीकरोमि। हे मङ्गल, चिरं भोगादिवर्ज्जितम् आत्मत्यागि दैहिकाभिलाषहीनं क्षमान्वितं प्रशान्तं ध्यानशीलं विनीतं नितरां पुनः उपासनाप्रधानं त्वत्सेवने रतञ्च विधवायाः मम जीवनं भवतु। एवं मे जीवनं शुभं तव अनुकम्पया मम चान्येषाञ्च आशिषे भूयात्। भोः अस्याः भूयायाः मच्छ्वश्र्वाः प्रियाय परेशाय ते महत् गौरवम् अस्तु।

इति वैधव्यव्रतम् ।

---

# साधकव्रतम् ।

सांसारिकत्वरोधाय प्रति त्वां हृदयस्य च ।
आभिमुख्याय मेऽनल्पकरुणावशतः प्रभो ॥
आनीतवान् पापिनं मां पवित्रवेदिसन्निधौ ।
यतोऽहं परिगृह्णीयां व्रतन्त्विदमुपस्थितम् ॥
एषा तवेच्छा यन्नाहं संसारिजनवत्पितः ।
यापयामि दिनान्यत्र सेवितं त्वान्तु केवलम् ॥
प्रीणयामि च तेषु स्यां जना ये तव नित्यदा ।
अमुके दिवसे मासि वर्षेऽद्य तव सन्निधौ ॥
पवित्रं प्रतिगृह्णामि साधकानां व्रतन्त्विदम् ।
अनेन मां निबध्नामि भक्त्यभ्यासे च संयमे ॥
सेवायै पुण्यमय्यास्या नवीनस्य विधेः पुनः ।
यथाशक्ति सहायो मे भव त्राता पिता मम ॥ १ ॥

इति साधकव्रतम् ।

---

१ । अधुना साधकव्रतमाह सांसारिकत्वेति । सांसारिकत्वरोधाय त्वां प्रति मे हृदयस्य च आभिमुख्याय, प्रभो, अनल्पकरुणावशतः पापिनं मां पवित्रवेदिसन्निधौ आनीतवान्, यतः अहम् इदम् उपस्थितं व्रतं परिगृह्णीयाम् । पितः, एषा तव इच्छा, यत् न अहम् अत्र संसारिजनवत् दिनानि यापयामि ; ये तव जनाः नित्यदा केवलं त्वां तु सेवन्ते प्रीणयन्ति च, तेषु स्याम् । अद्य अमुके दिवसे अमुके मासि अमुके वर्षे पवित्रं साधकानाम् इदं व्रतं प्रतिगृह्णामि । भक्त्यभ्यासे संयमे, यथाशक्ति नवीनस्य विधेः पुण्यमय्याः सेवायै च पुनः माम् अनेन निबध्नामि, मम त्राता पिता मे सहायः भव ।

इति साधकव्रतम् ।

---

## गृहस्थविरागिणां व्रतम् ।

उपासनान्ते कुर्व्वीत प्रतिज्ञानञ्च प्रार्थनम् ॥ १ ॥
यत्र सङ्घे समाहूतो गुरुश्चायासवन्ति च ।
तत् कृत्यानि प्रभो इच्छा तवैतत् व्रतमुत्तमम् ॥
अतो गृह्णामि तत्पूर्णां त्वन्निदेशं वहामि च ।
परात्मनस्ते शक्तौ च निर्भरं स्थापयाम्यहम् ॥
वैराग्यस्य गृहस्थस्य कृत्यस्यैक्यसमापनम् ।
नाहं जाने दुर्बलं मे चित्तं भीतं हि चिन्तया ॥
आत्मत्यागं बलं दैन्यं विनयञ्च प्रभो स्वयम् ।
वितर त्वं यथाहं स्यां संसार्य्यपि विरागिवत् ॥
यापयितुं दिनान्यत्र त्वत्कृपालेशतः क्षमः ।
अमुके दिवसे मासि वर्षे पुण्यतमं व्रतम् ॥
विरागिणां गृहस्थानां गृह्णामि तव सन्निधौ ।
प्रतिजानामि नियमानादेशानस्य रक्षितुम् ॥
उपार्ज्जितानि सर्व्वाणि धनान्यत्र विधेरिह ।
मण्डल्यां हि नवीनस्य सर्व्वथा निक्षिपाम्यहम् ॥
तन्निदेशात् समाजस्य परिवारस्य च प्रभो ।
व्ययेमि तानि मङ्गलाय मदीयां हि कचिन्तथा ॥
अभिलाषं परित्यज्य नयं जातु करोम्यहम् ।
ममतां समतिक्रम्य निष्कृतेरस्य जातुचित् ॥

१ । सम्प्रति गृहस्थविरागिणां व्रतं वक्तुमुपक्रमते उपासनान्त इति । उपासनान्ते प्रार्थनं प्रतिज्ञानञ्च कुर्व्वीत ।

त्वद्दानानि समस्तानि गृह्णाम्यत्र कृतज्ञवत्।
सम्भ्रमेष्वस्य मोदेषु संसारस्य बलेन ते ॥
सम्पादयामि दैन्यस्य व्रतं नित्यं समाहितः।
अतस्त्वं मे सहायः स्या आशिषा योजय प्रभो ॥ २ ॥

इति गृहस्थविरागिणां व्रतम्।

---

१। प्रार्थनं प्रतिज्ञानञ्चाह यथेति। अत्र सहे, प्रभो, समाहृतः तत्कृत्यानि गुरूणि आयासवन्ति च। तव दृष्टौ एतत् व्रतम् उत्तमम्। अतः अहं तत् गृह्णामि, मूर्ध्ना च त्वन्निदेशं वहामि, परात्मनः ते शक्तौ च निर्भरं स्थापयामि। वैराग्यस्य गृहस्थस्य कृत्यस्य च ऐक्यसमापनं न अहं जाने, चित्तं मे दुर्बलं, चिन्तया हि भीतम्। वितर, प्रभो, स्वयम् आत्मत्यागं बलं दैन्यं विनयञ्च, यथा अहं त्वत्कृपालेशतः संसारी अपि विरागिवत् दिनानि अत्र यापयितुं, नाथ, क्षमः स्याम्। अमुके दिवसे अमुके मासि अमुके वर्षे विरागिणां गृहस्थानां पुण्यतमं व्रतं तव सन्निधौ गृह्णामि, अस्य नियमान् आदेशान् रक्षितुं प्रतिजानामि। इतः सर्व्वाणि उपार्ज्जितानि धनानि नवीनस्य विधेः मञ्जूषायां सर्व्वथाप्यहम् अत्र निक्षिपामि। मदीयां रुचिं तथा अभिलाषं परित्यज्य त्वन्निदेशात् समाजस्य परिवारस्य च मङ्गलाय, प्रभो, तानि व्ययेमि। न अहम् ऋणम्, अस्य निष्कृतेः अमतां समतिक्रम्य, जातुचित् करोमि। समस्तानि त्वद्दानानि अत्र कृतज्ञवत् गृह्णामि। अस्य संसारस्य सम्भ्रमेषु मोदेषु बलेन ते नित्यं समाहितः दैन्यस्य व्रतं सम्पादयामि। अतः त्वं, प्रभो, सहायः स्याः, आशिषा योजय।

इति गृहस्थविरागिणां व्रतम्।

---

# प्रचारकव्रतम् ।

वर्षेऽतीते परीक्षार्थं शिक्षार्थं विनियोजिते ।
आचार्य्यसन्निधौ तावदानयेत्तं व्रतार्थिनम् ।
एकस्तत्सङ्घसम्पर्की ब्रुवन्नेवं ससम्भ्रमम् ॥ १ ॥
अयं ब्रवीति सङ्घेऽस्मिन् प्रचारकगणस्य तु ।
प्रवेष्टुं प्रेरितः पुण्यमयेन परमात्मना ॥
उपनयामि मण्डल्यास्तस्मात्तव च सन्निधौ ।
आर्य्य त्वं व्रतमस्मै च पुण्यं यच्छेति प्रार्थये ॥ २ ॥
पृच्छत्याचार्य्य एवं तमुत्तरं स प्रयच्छति ।
मनोनीतः स्वयं सङ्घः किमयं वाहूतो भवान् ॥ ३ ॥
आहूतः ; केन ? पुण्येन कृत्स्नेन परमात्मना ॥ ४—६ ॥
कथं जानासि ? चित्तस्य प्रेरणा मम चोत्तमा ।
उच्छ्वासस्य गतिं धत्ते तद्दिशा भानमप्युत ॥

१ । प्रचारकव्रतं वक्तुमुपक्रमते वर्ष इति । परीक्षार्थे शिक्षार्थे विनियोजिते वर्षे अतीते तत्सङ्घसम्पर्की एकः व्रतार्थिनं तं तावत् आचार्य्यसन्निधौ आनयेत्, ससम्भ्रमम् एवं ब्रूयात् ।

२ । अयमिति । अयम् अस्मिन् प्रचारकगणस्य तु सङ्घे प्रवेष्टुं पुण्यमयेन परमात्मना प्रेरितः । तस्मात् मण्डल्याः तव च सन्निधौ उपनयामि । आर्य्य, त्वम् अस्मै पुण्यं व्रतं यच्छ, इति प्रार्थये ।

३ । आचार्य्यस्य प्रश्नः, व्रतार्थिनः समुत्तरमिति क्रमेण वक्तुमाह पृच्छतीति । आचार्य्यः एवं पृच्छति, स व्रतार्थी तम् आचार्य्यम् उत्तरं प्रयच्छति । आचार्य्यः—किम् अयं सङ्घः स्वयं मनोनीतः ; भवान् आहूतो वा ?

४—६ । तमुत्तरयति व्रतार्थी—आहूतः । आचार्य्यः—केन ? व्रतार्थी—कृत्स्नेन पुण्येन परमात्मना ।

रुचिः सामर्थ्यमेतानि तस्मै योग्यानि जीवनम् ।
निखिलं वर्द्धितं तस्मिन् प्रकृत्येति समुत्तरम् ॥ ७।८ ॥
मातृगर्भे नियुक्तोऽसि ह्यस्मिंस्त्वं प्रभुणा स्वयम् ।
विश्वसिषि किमेवं त्वमागतः प्रकृतेः पुनः ।
नियोगं तं द्रढयितुं, विश्वसिम्यार्य्य ओमहम् ॥ ९।१० ॥
निदेशानस्य सङ्घस्य किमु विश्वासवत्तया ।
निष्पादयिष्यसे त्वन्तु यावज्जीवमुपैष्यसि ॥
प्रमाणत्वास्य वाक्यस्य विश्वस्तत्वेन सर्व्वथा ।
प्रचारको हि नित्यं स यः प्रचारक एकदा ॥ ११ ॥
ॐ स सहायो भगवान् भवतु प्रभुरत्र मे ॥ १२ ॥
प्रभोर्मण्डलीतन्त्रोकैः सम्बन्धस्तव को भवेत् ॥ १३ ॥

७।८। आचार्य्यः—कथं जानासि ? व्रतार्थी—मम चित्तस्य उत्तमा प्रेरणा उच्छ्वासः च तद्दिशा गतिं धत्ते । भानम् अपि उत रुचिः सामर्थ्यम् एतानि तस्मै योग्यानि, निखिलं मम जीवनं खलु प्रकृत्या तस्मिन् वर्द्धितम् । किमिदं भानम् ? निरुक्तमन्यत्र—

"बहिरन्तःस्वभावानां चिति यत्प्रतिमोदयः ।
भानमित्युच्यते सद्भिर्भातिज्ञानं तथा हि यत् ॥"

९।१०। आचार्य्यः—त्वम् अस्मिन् स्वयं प्रभुणा हि मातृगर्भे नियुक्तः असि किम् एवं विश्वसिषि ? त्वं पुनः प्रकृतेः तं नियोगं द्रढयितुम् आगतः ? व्रतार्थी—ओम्, अहम्, आर्य्य, विश्वसिमि ।

११। आचार्य्यः—अस्य सङ्घस्य निदेशान् किमु त्वं यावज्जीवं विश्वासवत्तया निष्पादयिष्यसे ? 'यः एकदा प्रचारकः स हि नित्यं प्रचारकः' अस्य वाक्यस्य सर्व्वथा यावज्जीवं विश्वस्तत्वेन किमु प्रमाणं च उपैष्यसि ?

१२। व्रतार्थी—ओम् । स प्रभुः भगवान् अत्र मे सहायः भवतु ।

१३। आचार्य्यः—प्रभोः मण्डलीतन्त्रोकैः कः तव सम्बन्धः भवेत् ?

न प्रभोर्न नियन्तुर्वा सेवकस्य तु भक्तितः।
अनुरक्तस्य विश्वस्तस्य च सेवां प्रकुर्व्वतः॥ १४॥
केनोपायेन चात्मानमात्मीयांश्च भरिष्यसि॥ १५॥
आत्मानं सर्व्वथा चाहं परिवारेण चार्पये।
मण्डल्यै अन्नताहारपरिच्छदकृते पुनः॥
चिन्तां जहामि विश्वासेनाहं हि करुणानिधेः।
विधातृत्वे पितुस्तस्य मां निक्षिपामि सर्व्वथा॥ १६॥
प्रतिज्ञामस्य सङ्घस्य प्रकाश्येन गृहाण तत्॥ १७॥
अमुके दिवसे मासि वर्षेऽस्य विनयेन च।
गाम्भीर्य्येण च गृह्णामि प्रचारकव्रतन्त्विदम्॥
कार्य्यं सर्व्वविधं सांसारिकं त्यक्त्वा समर्पये।
आत्मानं मम सर्व्वञ्च जीवनं नवीनस्य च॥
विधानस्य प्रचाराय सेवायै जनसंहतेः।
राज्यसंस्थापनार्थाय पृथिव्यां परमेशितुः॥
पवित्रमतविश्वासं पूर्णावयवमेव हि।
प्रचारयामि नास्याङ्गच्छेदं जातु करोमि च॥
लोकानुरञ्जनायाहं सत्यं प्रेम पवित्रताम्।
उपासनाञ्च भक्तिञ्च सर्व्वैक्यं परमात्मनि॥

१४। तत्रार्थो—न प्रभोः, न नियन्तुः, किन्तु अनुरक्तस्य विश्वस्तस्य भक्तितः सेवां प्रकुर्व्वतः सेवकस्य।

१५। आचार्य्यः—केन उपायेन च आत्मानम् आत्मीयान् च भरिष्यसि?

१६। तत्रार्थो—अहं सर्व्वथा आत्मानञ्च परिवारेण मण्डल्यै अर्पये, पुनः च अन्नताहारपरिच्छदकृते चिन्तां जहामि। विश्वासेन हि अहं करुणानिधेः पितुः तस्य विधातृत्वे मां सर्व्वथा निक्षिपामि।

१७। आचार्य्यः—तत् अस्य सङ्घस्य प्रतिज्ञां प्रकाश्येन गृहाण।

घोषयामि प्रचारेषु वर्द्धयामि च गौरवम् ।
विधानस्य नवीनस्य नाहं स्वर्णादिकं पुनः ॥
अन्विष्यामि न चिन्ताञ्च श्वस्तनीं कलयाम्यहम् ।
नानुयाम्यन्यवाणिज्यं विनात्मानयनं विभोः ॥
व्यवसायानभावांश्च मदीयान् परिरक्षितुम् ।
पूरयितुं सृजाम्येतान् सर्व्वथा मण्डलीकरे ॥
तथा परिश्रमं कुर्म्मि शक्तितः कर्म्म सन्ततम् ।
यथा मद्भरणे तस्या न क्षतिस्वार्थिको भवेत् ॥
विरागिणो दरिद्रस्य जीवनं निर्व्वहाम्यहम् ।
विनयावनतस्यात्र सर्व्वथा चार्पितात्मनः ॥
ईश्वरो मे सहायोऽस्मिन् नियतं भवतु प्रभुः ।
राजन् महत्वर्पय त्वं यतो भारमहं लभे ॥
पुण्यं प्रतिज्ञाबद्धस्य प्रचारकस्य मे प्रभो ।
विश्वासस्य बलं पुण्यं विशुद्धिं यत्क्षमो ह्यहम् ॥
प्रमाणयितुमस्य स्यां योग्यस्त्वन्नाम्न एव च ।
पृथिव्यां गौरवं नित्यमेधयामि जगत्प्रभो ॥ १८ ॥

१८। व्रतार्थी—अद्य अमुके दिवसे अमुके मासि अमुके वर्षे विनयेन च गाम्भीर्य्येण च इदं प्रचारकव्रतं गृह्णामि। सर्व्वविधं सांसारिकं कार्य्यं त्यक्त्वा आत्मानं मम सर्व्वञ्च जीवनं नवीनस्य च विधानस्य प्रचाराय, जनसंहतेः सेवायै, पृथिव्यां परमेशितुः राज्य-संस्थापनार्थाय समर्पये। पवित्रमतविश्वासं पूर्णावयवम् एव हि प्रचारयामि, लोक-रञ्जनाय न अहम् अस्य जातु अङ्गच्छेदं करोमि। अत्र सत्यं प्रेम पवित्रताम् उपासनां भक्तिञ्च परमात्मनि सर्व्वैक्यं च घोषयामि। प्रचारेषु नवीनस्य च विधानस्य गौरवं वर्द्ध-यामि। न अहं पुनः स्वर्णादिकम् अन्विष्यामि, न श्वस्तनीं चिन्ताञ्च अहं कलयामि। विभोः समीपे आत्मानयनं विना अन्यवाणिज्यं न अनुयामि। मदीयान् व्यवसायान् परिरक्षितुम् अभावान् च पूरयितुं सर्व्वथा एतान् मण्डलीकरे सृजामि। शक्तितः अत्र तथा सन्ततं

प्रभुर्नवविधेस्त्वामाज्ञास्त्वस्तु ते सहायक: ॥ १९ ॥
सर्व्वे प्रचारकास्तन्तु स्वजेरन् ये ह्युपस्थिता: ।
कमण्डलुञ्चैकतम्चौमुपायेरन् मुदा पुन: ॥ २० ॥
सङ्गीतानन्तरं शान्ति: शान्ति: शान्तिरितीह ते ।
सर्व्वे ब्रुवाणा विदध्युरनुष्ठानसमापनम् ॥ २१ ॥

इति प्रचारकव्रतम् ।

---

अहं कार्य्यं करोमि यथा मद्रचे तस्या धार्म्मिकी क्षति: न भवेत् । चिरात्मिक: दरिद्रस्य विनयावनतस्य सर्व्वदा अर्पितात्मन: च जीवनम् अत्र अहं निर्व्वहामि । प्रभु: ईश्वर: अस्मिन् मे नियतं सहाय: भवतु ।

राजन् मदन्, यत: अहम् अद्य प्रतिज्ञाबद्धस्य प्रचारकस्य कृत्स्नं तं भारं लभे, त्वं मे, प्रभो, विश्वासं बलं पुण्यं विशुद्धिञ्च अर्पय, यत् अहम् अस्य योग्य इति प्रमाणयितुं क्षम: स्याम् ; जगत्प्रभो, पृथिव्यां नित्यं त्वन्नाम्न: गौरवम् एधयामि च ।

१९ । आयार्थ:—नवविधि: प्रभु: त्वाम् आज्ञापयतु, तव सहाय: अस्तु ।

२० । सर्व्वे इति । ये सर्व्वे प्रचारका: उपस्थिता: तं तु स्वजेरन्, मुदा पुन: कमण्डलुम् एकतमञ्च उपायेरन् ।

२१ । सङ्गीतेति । सङ्गीतानन्तरं शान्ति: शान्ति: शान्ति: इह ब्रुवाणा: ते सर्व्वे अनुष्ठानसमापनं विदध्यु: ।

इति प्रचारकव्रतम् ।

---

इत् ।

---

# वर्णानुसारि-सूचीपत्रम्।



---

# आदर्शचरितम् ।

१। नारीमात्रे ब्रह्मकन्यात्वेनाहं * प्रीतिं वहामि सम्मानञ्च, न जातु तामुद्दिश्यासतीं चिन्तां प्रवृत्तिञ्चाभिनन्दामि ।

२। शत्रुष्वहं प्रीतिं वहामि मर्षयामि च तान्, न जातु तैरुद्विग्नोऽपि क्रुद्धोऽस्मि ।

३। परेषां भूतिष्वहं हृष्यामि, न जातु तेभ्य ईर्ष्यामि, न वा तान् द्वेष्मि ।

४। विनम्रो विनीतोऽस्मि । गर्व्वो वा ऽहमिका वा स्पर्धा वा धनजनजन्मकर्म-विद्यासामर्थ्यादिषु नावकाशं लभते मम हृदये ।

५। विरागी ; नाहं स्वमनार्थसिद्धोऽस्मि । नान्विष्यामि न च स्पृशामि पार्थिव-धनम् । यदेव विधातुरागच्छति तदेव केवलं स्वीकरोमि ।

६। महतां नमस्यानहं यथाशक्ति परिचरामि, पत्नीं प्रजाञ्च प्रकृतिं विधिमुपास्ते धर्म्मं च ।

७। न्यायानुगतोऽस्मि, यच्छामि च प्राप्यमन्यस्मै । मूल्यञ्च द्रव्याणां भृतिञ्च भृत्यानां समयमनतिक्रम्य ददामि ।

८। सत्यं वदामि, नान्यत् सत्यं विना । सर्व्वविधमनृतं मे जुगुप्सितम् ।

९। दरिद्रान् प्रति दयालुरहम् । व्याकुलोऽहं दुःखमोचनाय । यथाशक्ति यथा-नियमं यच्छामि धनं दानसङ्कल्पी ।

१०। नाहमात्मपरः ; परेषु प्रीतिं वहामि, समग्रमानवजातिमङ्गलदर्शनाय च श्रमं स्वीकरोमि ।

११। लग्नं मे हृदयमीश्वरे तदीयविषये च । नाहं संसारमग्नमना अस्मि ।

१२। एकस्मिन्नीश्वरे विश्वसिमि, सर्व्वतोभावेनाशंसनं नाभिनन्दामि ।

१३। विश्वसिम्यहं मानवमात्रस्य भ्रातृत्वेऽतो नाभिनन्दामि वर्णभेदम् ।

१४। सर्व्वसम्प्रदाय-सर्व्वशास्त्रगतानि सत्यान्यहमाद्रिये परिगृह्णामि च । अतीतोऽहं

---

* नारी चेत् साधनरता सा पुनः—नरमात्रे ब्रह्मतनयत्वेन तमुद्दिश्येति च पाठपरिवर्त्तनं कुर्य्यात् ।

साम्प्रदायिकत्वपापस्य। न पुनर्विश्वसिमि यत् मन्त्रस्य पुण्यस्य भगवन्नामविशेष-स्यामन्यगामि।

१५। यांश्च यांश्च विधीनाश्रित्य यांश्च यांश्च साधनप्रणालीराविर्भूय काले काले सर्वान्तरात्मा स्वाभिप्रायानभिव्यनक्, तेषु तेषु चाहं विश्वसिमि।

१६। विज्ञानमीश्वरस्याभिप्रायानभिव्यनक्तीति विश्वसिम्यतो हि यत् किञ्च तद्विरुद्धं जुगुप्सितं तन्मे।

१७। ज्ञानञ्च कर्म च भक्तिश्च योगश्च वैराग्यञ्च यस्मिन् नवे विधावेकतामाप्य साम-ञ्जस्यं भजन्ते नियतं तद्धर्मसाधनरतोऽहम्। नाहमेकं तेषु परित्यजामि मिष्टं परिहृत्य।

१८। दृढविश्वासोऽहमीशाःप्रमुखेषु महाजनेषु। तेन च विश्वासेन स्वहृदयोत्थ-मनुरागं सम्भ्रमञ्च तेषु बिभर्मि।

१९। धर्मविज्ञानस्य—निखिलमतसामञ्जस्यस्य सामान्यं स्वकीयमितरेषु च स्थाप-यितुं नियतं प्रयतमानोऽस्मि।

२०। श्रद्धावनतं ममेश्वरमपीयञ्च तस्य तापौ तन्निश्चमितिमातमानान्दतोऽस्मि।

---

# नवविधानलक्ष्यम् ।

१। समञ्जसं धर्म्ममतं विधातुं सर्व्वं विवादास्पदमत्र सन्तौ ।
२। प्राच्यं प्रतीच्यन्त्वविभक्तमेकं समाजमीशस्य च सार्व्वभौमिकम् ॥ १ ॥
३। एकत्वमुद्दिष्टमनेकधस्य विधानजातस्य च प्राक्तनस्य ।
४। नवीनप्राचीनमहर्षिसङ्घान्वयञ्च सन्न्यायनिबद्धयोगम् ॥ २ ॥
५। सत्यान्यवश्यं विविधश्रुतानां नित्ये श्रुते पर्य्यवसानुमत्र ।
६। समुन्नमुत्पाद्य च जातिभेदं भ्रातृत्वमाबन्धुमपेतसीमम् ॥ ३ ॥
७। महात्मचित्तप्रभवानुभावाः प्रीत्खियतां सम्प्रति लब्धवन्तः ।
क्रियासु लिङ्गेषु च यासु येषु यथायथञ्चार्पयितुं तदर्थम् ॥ ४ ॥
८। निर्म्मातुमालम्ब्य तुलानयञ्च सद्धर्म्मविज्ञानमथैकमत्र ।
९। इहेशसा स्थापयितुञ्च दिष्टं यत् स्वर्गराज्यं हि पुरोपनेतुम् ॥ ५ ॥
१०। धर्म्माभिनं ध्वंसयितुं प्रकामं सजीवनं भावमतोऽवलक्ष्य ।
११। व्याख्यामतोऽन्वेतुमथैकवादमद्वैतवादं बहुवादमत्र ॥ ६ ॥
१२। रहस्यमुद्घाटयितुं त्रिमूर्त्तेस्तथैकतां दर्शयितुञ्च तत्र ।
१३। प्राचीनविश्वासनवीनविज्ञानयोर्विधातुं मिलनं समयम् ॥ ७ ॥
१४। देवेरणाया अपि दर्शनस्य
१५। वैराग्यभावस्य च सभ्यतायाः ।
१६। ऐशासधर्म्मस्य च भारतार्य्यधर्म्मस्य युक्तस्य समञ्जसत्वम् ॥ ८ ॥
१७। प्रासञ्च प्रत्यञ्चमिरोपमाश्रियां चित्ते समुन्वेतुमनूननूवे ।
१८। प्रोद्घाटितं द्वारमथावरच्चितुं तत् प्रेरणायाः परदेवतायाः ॥ ९ ॥
१९। सुष्टूपरि स्थापयितुं हि नूनमूलस्य योगेरणयोर्मतानि ।
प्रेष्ठान्वयर्थ्यन्वयनावतारशास्त्रप्रजाभान्तिसुनिष्कृयाणाम् ॥ १० ॥
२०। बाह्याहुतेभ्यो हृदयं नराणामाकष्टुं मन्तःकरणोद्भवेभ्यः ।
२१। निन्द्यं ह्यधःकर्त्तुमथ प्रकामं विज्ञानजात्तैर्निसर्गवादम् ॥ ११ ॥

# नवविधानमतसारः।

---

১। ईश्वरस्त्वेकः।

২। शास्त्रमेकम्।

৩। मण्डली चैका।

৪। आत्मा पुनरमरः, नित्यकालोन्नतिभाक्, गमनादानवाध्यो नानाविधानां कर्त्तव्यानां निर्व्वाहस्य, पुण्यस्य पापस्य च हेतोरिह परत्र च दण्डपुरस्कारविचारभाक्, अधिकारी पुनर्विज्ञानविवेकयोगेन लब्धायां नैसर्गिक्यां विशेषायां साधारण्याञ्च प्रेरणायामालोकार्पकब्रह्मविज्ञाने च, रक्षितो नियतं सर्व्वेशां परित्राणकारणेन भगवत्प्रेम्णा तत्साधारणविशेषविधातृत्वेन च, इहैव च स्वर्गभाक् तस्मिन् जीवनधारणेन।

৫। ऋषिभिः साधुभिश्च योगः।

৬। भगवतः पितृत्वं मातृत्वञ्च, मानवमानवीनां भ्रातृत्वं भगिनीत्वञ्च।

৭। स्वीकरणं पुनरैकाधारतायाः प्राचीनज्ञानानां नवीनविज्ञानानाञ्च, समञ्जसत्वस्य च सर्व्वर्षिषु साधुषु च, एकत्वस्य च निखिलशास्त्रेषु, क्रमयोगतायाश्च विधानेषु, परिवार्य्यत्वस्य च भेदसाधनानां, अविच्छेद्य आत्मैकतायाः, समञ्जसतायाश्च ज्ञान-विश्वासयोर्योगभक्त्योर्वैराग्यकर्त्तव्ययोरावश्यकीः।

৮। राजभक्तिः।

# Samanvaya Series

BY PANDIT GOUR GOVIND RAY UPADHYAYA

| | |
|---|---|
| गीता-समन्वयभाष्यम् | ५) |
| श्रीमद्गीताप्रपूर्त्तिः | ३॥० |
| वेदान्तसमन्वयः ( यन्त्रस्थ ) | ५) |
| नवसंहिता | ॥० |
| नवविधानम् | ⁄० |
| नवयोगसूत्रम् | ।० |
| विश्वासविवृतिः | ।० |
| भाष्यसङ्गमनी १म खण्डम् | १\ |

## असमग्रमुद्रिता ग्रन्थाः ।

जीवनवेदः ।

ब्रह्मगीतोपनिषत् ।

दृष्टान्तसर्व्वस्वम् ।

Publishers, 3 Romanath Mazoomdar's Street &

86-2, Harrison Road, Calcutta

मङ्गलगञ्जमिशनप्रेसे मुद्रिता

१८२४ शाके ।

# Samanvaya Series

BY PANDIT GOUR GOVIND RAY UPADHYAYA

| | |
|---|---|
| गीता-समन्वयभाष्यम् | ५) |
| श्रीमद्गीताप्रवृत्तिः | ३॥० |
| वेदान्तसमन्वयः ( यन्त्रस्थ ) | ५) |
| नवसंहिता | ॥० |
| नवविधानम् | ⁄० |
| नवयोगसूत्रम् | ।० |
| विश्वासविवृतिः | ।० |
| भाष्यसङ्गमनी १म खण्डम् | १) |

## असमग्रमुद्रिता ग्रन्थाः ।

जीवनवेदः ।

ब्रह्मगीतोपनिषत् ।

दृष्टान्तसर्व्वस्वम् ।

Publishers, 3 Romanath Mzoomdar's Street &

86-2, Harrison Road, Calcutta

मङ्गलगञ्जमिशनप्रेसे मुद्रिता

१८२५ शाके ।

# नवसंहिता ।

---

## प्रार्थनावतारः ।

नित्यज्ञान विधेहि किङ्करजने प्रेष्ये मयि ज्ञानद-
मालोकन्तव यद्यथायथमहं नूत्नान् विधीन् घोषये ।
अस्मिन् पुण्यमये तवातिदयिते देशे समस्थापय-
स्त्वं यां भ्रातृजनैर्नवीनसमितिं तन्मार्गसन्दर्शकान् ॥ १ ॥
वर्णैः स्वर्णमयैर्विधींस्तव पुनः प्रत्येकमन्तर्विभो
तानुट्टङ्कय घोषयाशनिरवाट्टम्भिस्वरैः सर्व्वतः ।

प्रणम्य परमात्मानं भक्तानां दैन्यवर्द्धनम् ।
नवीनसंहिताव्याख्यां कुर्व्वेऽन्वर्थविबोधिनीम् ॥

१। इह पुनः सर्व्वधर्म्मसमन्वयनिपुण आचार्य्यः स्वयं भगवता संस्थापितनवीन मण्डलीनियमनाय तन्निर्दिश्यतो नियमान् प्रचारयितुमालोकन्ततः प्रार्थयते नित्यज्ञानेति । हे नित्यज्ञान सृष्टेरपि प्रागवस्थितज्ञान प्रेष्ये प्रेरिते किङ्करजने मयि तव ज्ञानदं तमो निरस्य यथार्थज्ञानविकाशकम् आलोकं विधेहि वितरेति यावत् । यत् यस्मादालोकलाभात् अहम् अस्मिन् पुण्यमये तव अतिदयिते अतिशयप्रिये देशे त्वं यां भ्रातृजनैः भ्रातृवर्गैर्भ्रातृभगिनीभिस्तत्करणिकामित्यर्थः नवीनसमितिं नूतनजनसंहतिं समस्थापयः संस्थापितवान् तन्मार्गसन्दर्शकान् तस्याः समितेः पथिप्रदर्शकान् नूत्नान् नवीनान् विधीन् घोषय प्रचारयामीत्यर्थः ।

धातुस्ते महतो विधानमभि ते पुत्राय पुत्राः प्रियाः
शीर्षाण्यानमिता नमन्तु नितरां भक्त्यातिहृद्याशयाः ॥ २ ॥

पवित्रात्मा ह्यस्मिन्नवतरतु पूते हिमगिरौ
तवाविष्कर्त्तुं त्वद्विधिनिचयमाशुद्धिविधये
अपेक्षासम्पन्नं प्रति परिणतं भारतमसौ
ध्वनिस्ते विश्वस्ते ध्वनतु हृदि सोऽन्वेतु चकितः ॥ ३ ॥

लिपिर्न पत्रे न च ते विधिर्वा
ग्रन्थस्तदर्थे करणीयजातम् ।
त्वमात्मनिस्तब्धगिरा ब्रवीषि
जीवात्मने त्वद्दयागाय सम्यक् ॥ ४ ॥

२। धातुरिति। हे विभो प्रत्येकमन्तः प्रतिजनहृदयं तान्येव शिर्षाणि पुनः सर्वाणि सर्वैर्वर्णैः स्वर्णादिभिः उद्भूय उद्भूय विभज्य। सर्वतः सर्वस्यां दिशि अन्य [illegible] शेषः अश्रुनिरवाप्तैश्चत्वरैः नवनिमादर्शदिवसैः धौतय तानिति शेषः। धातुर्विधान कर्तुर्महतस्तव विधानमभि विधाने पुत्राय पुत्राय आनमिता [illegible] यावत् न केवल-मानमिताः किन्तु भक्त्या अतिहृद्याशया अतिमर्महृष्टचित्ताः शीर्षाणि नितरामतिशयेन नमन्तु प्रणीकुर्वन्तु प्रणामं कुर्वन्तु इत्यर्थः।

३। पवित्रात्मेति। अस्मिन् पूते पवित्रे हिमगिरौ हिमाचले पवित्रात्मा अन्तर्हृदय-नाशी पुण्यरूपी परात्मा अवतरतु अवतरणं करोतु। किं कर्त्तुं तव विधातुः विधिनिचयम् आशुद्धिविधये परिशुद्धजीवनविधानार्थम् अपेक्षासम्पन्नं समपेक्षितवन्तं परिणतं सर्वतो भावेन नतं भारतं प्रति आविष्कर्त्तुं प्रकटयितुम्। असौ ते तव ध्वनिः विधाम [illegible] णवाणी विश्वस्ते हृदि ध्वनतु। स विश्वस्तहृदयो जनः चकितः भयविस्मयकम्पितः अन्वेतु अनुसरण करोतु तं ध्वनिमिति शेषः।

४। लिपिरिति। ते तव विधिः पत्रे न लिपिः लिखनं वर्णादिविन्यासः न वा ग्रन्थः पुस्तकविशेषः। किन्तर्हि अस्य त्वद्दयागाय जीवात्मने करणीयजातं कर्त्तव्यसमूहं

विज्ञानोचितकाल आत्थ न विभो स्वल्पाय शिष्याय तु
प्रेष्याचार्य्यविधेयभक्तशरणापन्नेष्टवृन्दाय च।
अन्यैः किं स्थवराय प्रत्ययवते वार्त्ता हृदायास्यति
शक्त्यालोकयुता प्रमाणमिति सा ग्राह्या मुदा स्वैस्तव॥ ५॥

भारतस्य वद पूर्व्वजन्मना-
मीश्वराद्य नवसंहितां विभो।
घोषयस्व च नवीनमण्डली-
लोकसंसदि जनार्त्तिभञ्जन॥ ६॥

इति प्रार्थनावतारः।

---

आत्मभिन्नस्वगिरा आत्मनोनिःशब्दवचसा सम्यग्यथार्थं त्वं ब्रवीषि कथयसि प्रकटयसीति यावत्। यद्येवं कथमियं संहिता? भगवद्वाक्यस्य दैनिककल्ये प्रयोगोऽनया, न त्वन्यथाऽनुसर्त्तव्या भावत एवेति वक्ष्यमाणैरेव स्फुटीभविष्यति।

५। विज्ञानेति। विज्ञानोचितकाले विज्ञानप्रधानेऽस्मिन् समये हे विभो स्वल्पाय स्वल्पसंख्यकाय मनोनीतायेत्यर्थः न आत्थ ब्रवीषि, तु किन्तु प्रेष्याचार्य्यविधेयभक्तशरणापन्नेष्टवृन्दाय च प्रेष्याणां प्रेरितानाम् आचार्य्याणां विधेयानां दासानां भक्तानां शरणापन्नानाम् इष्टानां वृन्दाय समूहाय च ब्रवीषि। अन्यैः किं, स्थवराय वृद्धतमाय प्रत्ययवते विश्वासवते ब्रवीषि। वार्त्ता त्वत्तः संवादः शक्त्यालोकयुता शक्तिश्च आलोकश्च ताभ्यां समन्विता सदा हृदययोगेन आयास्यति आगमिष्यति। तत्र स्वैः स्वकीयैः त्वन्मण्डलीगतैस्तद्गृहस्थैश्च सर्व्वैर्जनैः मुदा आनन्दितहृदयेन सा वार्त्ता प्रमाणमिति ग्राह्या ग्रहणीया।

६। भारतस्येति। हे विभो भारतस्य पूर्व्वजन्मनामस्माकं पूर्व्ववंशीयानाञ्च ईश्वर अद्य नवसंहितां वद। हे जनार्त्तिभञ्जन जनदुःखनिवारण, नवीनमण्डलीलोकसंसदि नवीना या मण्डली त्वया संस्थापिता तस्या लोकसंसदि घोषयस्व च तां संहितामिति शेषः।

इति प्रार्थनावतारः।

# गृहम् ।

विश्वासवान् गृहं नित्यं परिच्छन्नं परिष्कृतम् ।
यस्माद्रक्षेत् प्रभोस्तस्मदाशीर्वादमश्नुते जनैः ॥ १ ॥
परिष्कृतिर्हि देवत्वमनु दिष्टेन रागिणा ।
गेहं देहश्च शुद्धात्मा मन्दिरत्वाय कल्पते ॥ २ ॥
तत्र सर्व्वा च सामग्री प्रभोस्तद्दानमानभाक् ।
पवित्राय च लक्षाय नियोज्यं गृहवासिना ॥
अथापि तन्महानामगौरवाय भवाय च ।
सांसारिकाय नित्याय तदीयानां निरन्तरम् ॥ ३ ॥

१। प्रथमतस्य गृहसम्पर्कीयान् विधीनाह विश्वासवानिति। विश्वासवान् नित्यं गृहं परिष्कृतं मार्ज्जितं परिच्छन्नं परिष्कृतभावेन सज्जितं यथा रक्षेत्। कथमेवं कुर्य्यात्? यद् यस्मात् तद्गृहं प्रभोः परमेश्वरस्य। तस्य आशीर्जनैर्लभ्यते। तद्गृहं दृष्ट्वा ते जानीयुः इदं गृहं प्रभोः, तस्याशीरत्र विद्यत इति भावः।

२। परिष्कृतिरिति। हि यस्मात् देवत्वम् अनु परिष्कृतिः गण्यतेति शेषः। दिष्टेन गेहादिकं परिशुद्धा मन्दिरत्वेन कल्पयितुमादिष्टेन रागिणा ईश्वरानुरक्तेन कर्त्रा गेहं देहः आत्मा च शुद्धा मन्दिरत्वाय कल्पते साध्यते।

३। तत्रेति। तत् गृहं सर्व्वा सामग्री च प्रभोः परमेश्वरात्। तत् ससामग्रीकं गृहं दानमानभाक् परमेश्वरदानत्वेन सम्मानभाजनम्। गृहवासिना गृहस्थेन ससामग्रीकं तद्गृहं पवित्राय लक्ष्याय अथापि तन्महानामगौरवाय तस्य प्रभोः महतो नाम्नो गौरवाय तदीयानां तस्य परमेश्वरस्य जनानां सांसारिकाय ऐहलौकिकाय नित्याय शाश्वताय भवाय कल्याणाय च नियोज्यम् व्यवहार्य्यम्।

स ग्रोच्यः स्तेयदोषार्हो ममेवेत्यसदाग्रहः।
पार्थिवं देवरहितं मत्वा सम्मानवर्ज्जितः॥
अमिताचारतोऽशुचे लच्ये तत्ताञ्च यः पुनः।
नियुङ्क्ते कामतः साधुगर्हिते पथि सञ्चरन्॥ ४॥
गृहन्तद्वस्तुसहितञ्चार्पयेन्मन्दिरं यथा।
पराय स्वामिने ह्येवं प्रयतात्मा यथाविधि॥ ५।
परमेश गृहस्थानां गृहं तुभ्यं समर्पये।
वस्तुजातञ्च तत् तत्स्थानाशास्स्व च पुनीहि च॥ ६॥

४। स इति। स गृहस्थः ग्रोच्यः ग्रोकार्हः स्तेयदोषार्हः चौर्य्यापराधयोग्यः, यः ममेवेत्यसदाग्रहः ससामग्रीकं तद्गृहं ममैवेति असदाग्रहो यस्य तथोक्तः। पुनः कथम्भूतः? पार्थिवम् ऐहलौकिकं देवरहितं देवाधिष्ठानवर्ज्जितं मत्वा सम्मानवर्ज्जितः तत् प्रति सम्भ्रमशून्यः। पुनः कथम्भूतः? तत् गृहं ताञ्च सामग्रीं साधुगर्हिते साधुजननिन्दिते पथि सञ्चरन् कामतः अमिताचारतः अशुचे अपवित्रे लच्ये नियुङ्क्ते व्यवहरति।

५। गृहमिति। यथा मन्दिरं देवायतनं तथा तद्गृहन्तु वस्तुसहितं ससामग्रीकं पराय स्वामिने प्रभवं प्रयतात्मा विशुद्धहृदयः सन् यथाविधि एव वक्ष्यमाणप्रकारेण समर्पयेत् अर्पितं कुर्य्यात्।

६। हे गृहस्थानां परमेश गृहं वस्तुजातञ्च तुभ्यं समर्पये समर्पितं करोमि। तद्गृहं पुनीहि पवित्रं कुरु, तत्स्थान् जनान् आशास्स्व आशिषा योजय। वस्तुजात-समर्पणं यथा—एतानि गृहोद्यानादीनि परब्रह्मणेऽहं निवेदयामि। अस्य गृहस्य कुञ्चिकाद्याः समस्ता सामग्रीः परब्रह्मणेऽहं निवेदयामि। एतानि आमाम्रादीनि पर-ब्रह्मणेऽहं निवेदयामि। एतानि परिधेयवस्त्रादीनि परब्रह्मणेऽहं निवेदयामि। एतां शय्यां परब्रह्मणेऽहं निवेदयामि। एतानि तैजसादीनि परब्रह्मणेऽहं निवेदयामि। एतानि पुस्तकपत्रीलेखनीमस्याधारादीनि परब्रह्मणेऽहं निवेदयामि। एतानि औषधानि पर-ब्रह्मणेऽहं निवेदयामि। एतानि रजतताम्रखण्डादीनि परब्रह्मणेऽहं निवेदयामि।

गृहस्थानि च सर्व्वाणि तानि भान्त्विति सर्व्वथा।
परिष्कृतानि संरक्षेदमेध्याद्दारितानि च॥
पांशवो गलितत्वं वा पूतयो दूषितान्यथ।
दूषयेरन् गृहं तच्च परमेशस्य जातुचित्॥ ७॥
संस्कुर्य्याद्गृहकुट्टीरमस्येत्स्वावर्ज्जनादिकम्।
प्रत्येकं प्रत्यहं तेषां वारिशोधनसंस्कृतिः।
पवित्रानिलमित्रांशुसम्पर्काप्रतिरोधिता॥ ८॥

एतान्येकतत्त्वोपभक्तानि धर्म्मसाधनोपकरणानि परब्रह्मणश्च निवेदयामि। विशेषप्रार्थनञ्च यथा—सन्तानादिपालनं दासदासीपालनं विद्याध्ययनं दीनजनाय दानम् अतिथिसेवा पालितपश्वादिरक्षा आहारः व्यायामः विश्रामो धर्म्मोपार्ज्जनं तदायव्ययादीनि यावन्त्यस्य संसारस्य कृत्यानि गृहकर्त्री धर्म्मानुवर्त्तिनी निष्पादयेत। मन्दिरे प्रचारार्थे दीनदुःखिजनार्थेऽच यथाशक्ति दानानि विधायानुष्ठाने निर्व्वहेत।

७। गृहस्थानीति। गृहस्थानि च सर्व्वाणि तानि सर्व्वथा भान्त्वित्युक्तानि परिष्कृतानि अमेध्यादपवित्रवस्तुजाताद्दारितानि संरक्षेत्। जातुचित् कदाचित् परमेश्वरस्य तद्गृहं पांशवो धूलयः गलितत्वं पूतयो वा दूषितानि दुष्टद्रव्याणि वा न दूषयेरन् दुष्टं कुर्य्युः।

८। संस्कुर्य्यादिति। प्रत्यहं प्रतिदिनं गृहकुट्टीरं गृहदिभाजकांशं (कुठरीति लोके) संस्कुर्य्यात् परिष्कृतं कुर्य्यात्। आवर्ज्जनादिकञ्च धूल्यपवित्रपदार्थांश्च अस्येत् दूरं विनिक्षिपेत्। तेषां गृहकुट्टीराणां प्रत्येकम् एकैकं प्रति वारिशोधनसंस्कृतिः वारिणा शोधनवस्तुना च संस्कृतिः संस्कारः पवित्रानिलमित्रांशुसम्पर्काप्रतिरोधिता पवित्रवायुसूर्य्य-किरणसम्पर्कस्य अप्रतिरोधिता विना व्याघातेनान्तःप्रवेशः स्यात्।

जुगुप्सितञ्चातिमात्रं दुर्गन्धं स्वामिने मतम् ।
वैसृङ्कल्यमसौन्दर्य्यं प्रभुर्न च सहिष्यति ॥ ९ ॥
सौन्दर्य्यं व्यवहार्य्यत्वं प्रीतये परमेशितुः ।
स्वास्थ्यं स्वास्थ्यनिदानञ्च तस्येष्टं श्रीः सुसृङ्खला ॥ १० ॥
वसत्युपासको यत्र विचित्रं शुद्धिमद्गृहम् ।
दर्शनीयञ्च तन्नित्यं स्यादित्याह स्वयं प्रभुः ॥ ११ ॥
प्रातः प्रतिदिनञ्चातः पुष्पैः पत्रैः सुशोभितम् ।
नेत्रसन्तर्पकैर्वर्णैर्हृद्यैः सुरभिभिः कुरु ।
गन्धद्रव्यैश्च धूपाद्यैर्गृहं देवस्य सम्भृतम् ॥ १२ ॥

९ । जुगुप्सितमिति । स्वामिने परमेश्वराय दुर्गन्धञ्च अतिमात्रं जुगुप्सितञ्च अतीव घृणम् । प्रभुरीश्वरः वैसृङ्कल्यं सृङ्खलाविरहितत्वम् असौन्दर्य्यं शोभाविहीनत्वं न च सहिष्यति, तत् तस्यातीव विरोधीति भावः ।

१० । कथमेवं भवति तदेवाह सौन्दर्य्यमिति । सौन्दर्य्यं श्रीसम्पन्नत्वं व्यवहार्य्यत्वं व्यवहारोपयोगित्वं परमेशितुः परमेश्वरस्य प्रीतये प्रीत्यर्थं भवति । स्वास्थ्यं शरीरस्य प्रकृतौ स्थितिः स्वास्थ्यनिदानं स्वास्थ्यवर्द्धने कारणभूतव्यवस्था श्रीः यथावद्वस्तुसंस्थानजनिता शोभा सुशृङ्खला च तस्य परमेश्वरस्य इष्टं तत्तत्तेनेष्यते ।

११ । एतद्विषये साक्षात् परमेशनिर्देशमाह वसतीति । यत्र गृहे उपासक उपासनाशीलः वसति तद्गृहं विचित्रं विविधसज्जावर्णादिभिः शोभितं शुद्धिमत् पवित्रं दर्शनीयं दृशौ हारि च स्यात् इति स्वयम ईश्वरः आह ।

१२ । किं कर्त्तव्यमेतदर्थं तदाह प्रातरिति । अतः कारणात् प्रतिदिनं प्रत्यहं प्रातः प्रातःकाले देवस्य परमेश्वरस्य गृहं वर्णैः नेत्रसन्तर्पकैः नयनाह्लादवर्द्धकैः सुरभिभिः सद्गन्धैः हृद्यैः पुष्पैः पत्रैः सुशोभितं धूपाद्यैः गन्धद्रव्यैश्च सम्भृतं सम्यगृद्धिसम्पन्नं कुरु ।

एकस्मिन् तु कुटीरे गृहे सर्व्वत्र तद्विधिः ।
पालनीयोऽर्च्चनागेहे सभाकुट्टिमके तथा ॥
कुटीरेऽध्ययनार्थाय शयनार्थाय नित्यशः ।
स्नानाय भोजनार्थाय पाकशालाश्वशालयोः ॥
वसतौ दासदासीनामुद्याने नितरां तथा ।
स्वास्थ्यं सौन्दर्य्यमेकत्र कुर्य्यातां राज्यमुच्छ्रितम् ॥ १३ ॥
शय्या परिष्कृता वस्त्राण्याधारेऽवस्थितानि च ।
यथायथं पुस्तकानि स्युस्तथा पुस्तकालये ॥
गृहद्रव्याणि सर्व्वाणि छत्रादीनि च सर्व्वथा ।
मृद्धातुकाचपात्राणि पाकानां साधनानि च ।
यथास्थाननिविष्टानि सुरुच्यनुगुणेन च ॥ १४ ॥

१३ । एकस्मिन्निति । न एकस्मिन् कुटीरे गृहविभागकांशे तु किन्तु गृहे सर्व्वत्र तद्विधिः तस्य सौन्दर्य्यस्य शुद्धेश्च विधिः पालनीयः । अर्च्चनागेहे देवालये सभाकुट्टिमके सभ्यजनसम्मिलनार्थसौधभूतले अध्ययनशयनस्नानभोजनार्थगृहविभागकांशेषु रन्धनगृहे अश्वरक्षणशालायाञ्च दासदासीनाञ्च वसतिस्थाने तथा उद्याने नितराम् अत्यर्थम् एकत्र स्वास्थ्यं सौन्दर्य्यम् उच्छ्रितं समृद्धं राज्यं कुर्य्यातां सर्व्वत्र स्वास्थ्यं सौन्दर्य्यञ्च विराजेयातामित्यर्थः ।

१४ । शय्येति । शय्या परिष्कृता मालिन्यवर्ज्जिता स्यात्, वस्त्राणि आधारे तद्रक्षणस्थाने यथायथं सुशृङ्खलतया अवस्थितानि संरक्षितानि, पुस्तकालये पारिवारिकग्रन्थनिचयरक्षणगृहे पुस्तकानि तथा सुशृङ्खलतया रक्षितानि स्युः, सर्व्वाणि गृहद्रव्याणि छत्रादीनि मृद्धातुकाचपात्राणि पाकानां साधनानि च सुरुच्यनुगुणेन सुरुच्यनुसारेण सर्व्वथा यथास्थाननिविष्टानि स्युः ।

अधिकावहितिर्देया पूजागेहेऽस्य वेदिका ।
सम्मानितव्या सर्व्वस्मात् सेयं या पारिवारिकी ॥
गीतप्रवचनग्रन्था वेदी भक्तासनानि च ।
पुष्पाधाराश्चैकतन्त्री वादित्राणि च नित्यशः ॥
रचितव्यानि यत्नेन मार्ज्जितानि च तद्गृहम् ।
शोभयेयुः पुष्पजातैः प्रातरत्र पुरस्त्रियः ॥ १५ ॥
उत्कीर्णा लम्बमाना वा कुड्ये चित्रितसूक्तयः ।
शिक्षार्थं शोभनार्थं वा न त्वर्चा मूर्त्तयोऽपि वा ॥ १६ ॥
अथर्व्ववेदसम्प्रोक्तं साम्मनस्यविवर्द्धनम् ।
उत्कीर्य्येत दर्शनीये स्थाने सूक्तं मनोमतम् ॥
"सहृदयं साम्मनस्यमविद्वेषं कृणोमि वः ।
अन्योन्यमभिहर्य्यत वत्सं जातमिवाघ्न्या ॥
अनुव्रताः पितुः पुत्त्रो मात्रा भवतु सम्मनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवान् ॥

१५ । अधिकेति । पूजागेहे पारिवारिकोपासनालये अधिका अवहितिः अवधानं देया । अस्य देवालयस्य या पारिवारिकी वेदिका सेयं सर्व्वस्मात् सर्व्वमतिक्रम्य सम्मानितव्या समादर्त्तव्या। गीतानां प्रवचनानां ग्रन्थाः, वेदी, भक्तानां तत्रत्योपासकानाम् आसनानि, पुष्पाधाराः, एकतन्त्री, वादित्राणि मृदङ्गादीनि नित्यशः यत्नेन मार्ज्जितानि परिष्कृतानि रचितव्यानि । अत्र प्रातः पुरस्त्रियः गृहवासिन्यः तद्गृहं पुष्पजातैः शोभयेयुः शोभितं कुर्य्युः ।

१६ । उत्कीर्णेति । कुड्ये देवार्च्चनागृहभित्तौ चित्रितसूक्तयः शोभनवर्णलिखिता उपयोगिन्यः सूक्तयः उत्कीर्णाः खोदिताः वस्त्रमाणा वा पत्रान्तरे लिखिता लम्बमाना आलम्बमानाः स्युः । न तु शिक्षार्थं शोभनार्थं वा अर्चा अपि वा मूर्त्तयः स्युः ।

मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥" १७॥
सर्व्वोचितमकर्त्तव्यदर्शि प्रवचनन्त्विदम्।
गृहस्थानां हि तन्त्रोक्तं भवत्वत्र निदर्शनम्॥
"ब्रह्मनिष्ठो गृहस्थः स्यात्तत्त्वज्ञानपरायणः।
यद्यत् कर्म्म प्रकुर्व्वीत तद्ब्रह्मणि समर्पयेत्"॥ १८॥
एवं सम्मार्ज्जितं गेहं पवित्रञ्च सुमङ्गलम्।
शास्त्रोक्तसूक्तजातैश्च सदा नियमितञ्च यत्॥
तत्सत्यं हर्षसौन्दर्य्यप्रसादसम्पदां खलु।
देव्या लक्ष्म्यास्ततस्तत्र नरनार्य्यश्च बालकाः॥

१७। अथर्व्वेति। साम्मनस्यविवर्द्धनं शान्त्या मिलनेन च सुमनस्कतावर्द्धनम् अथर्व्ववेदोक्तं मनोमतं हारि सूक्तं दर्शनीये दर्शनयोग्ये स्थाने जनकार्थेन उद्धृतम्। सहृदयमिति। वो युष्माकं मध्ये सहृदयं समहृदयत्वम् अविद्वेषं द्वेषशून्यत्वं कृणोमि विदधामि स्तोत्रयोगेन तत्तत् प्रार्थयामीति यावत्। अघ्न्या गौः जातं वत्समिव अन्योन्यम् अभिहर्य्यत एकोऽन्यस्य चित्तं हरतु। पुत्रः पितुः अनुव्रतः अनुगामी, मात्रा सम्मनाः सुमनस्कः भवतु। जाया पत्नी पत्ये पतिमुद्दिश्य मधुमतीं मधुरां वाचं वदतु, पतिश्च ततः शान्तिवान् शान्तियुक्तो भवतु। भ्राता भ्रातरं मा द्विक्षत्, उत अपि च स्वसा भगिनी स्वसारं भगिनीं मा द्विक्षदिति शेषः। सर्व्वतः सम्यञ्चः मनोज्ञाः भूत्वा भद्रया [illegible]त्ययेन भद्रां कल्याणीं वाचं वदत वदन्तु छान्दसात्वचनव्यत्ययः।

१८। सर्व्वोचिति। गृहस्थानां सर्व्वोचितमकर्त्तव्यदर्शि इदं तन्त्रोक्तं महानिर्व्वाणलिखितं प्रवचनम् अत्र प्रवचनविषये निदर्शनं दृष्टान्तस्वरूपं भवतु। "गृहस्थः ब्रह्मनिष्ठः ब्रह्मभजनानुरक्तः तत्त्वज्ञानपरायणः स्यात्। यद्यत् कर्म्म प्रकुर्व्वीत अनुतिष्ठेत् तद्ब्रह्मणि समर्पयेत् तदर्पणेन कुर्य्यात्।

बालिका दासदास्यश्च गृहपालितजन्तवः ।
सर्व्वे सुखमया नित्यं वसन्ति तत्समाश्रये ॥ १९ ॥
स्तोत्राण्युदीरयिष्यन्ति कुड्यान्यप्यस्य सन्ततम् ।
महीययन्ति तत्रत्यास्तानि नवविधेः प्रभुम् ॥ २० ॥

इति गृहम् ।

---

## गृहस्थः ।

गृही प्रातः प्रबुद्धः स्यान्नात्युदीते न चात्युषे ॥ १ ॥
समहोरापरिव्याप्तस्वापं प्रभुरथादिशत् ।

१९ । एवमिति । एवम् एवम्प्रकारेण सम्मार्ज्जितं परिष्कृतं पवित्रं विशुद्धं सुश्रृङ्खलं सुन्दरशृङ्खलासम्पन्नं शास्त्रोक्तसूक्तजातैश्च सदा नियमितं सत्तन्त्रियुक्ततत्त्वसमूहेन सम्यक् शासितं यत् गृहं तत् खलु सत्यं सत्यतः सर्व्वसौन्दर्य्यप्रसादसम्पदां देव्याः तत्तद्विधात्र्याः लक्ष्म्याः, सैवास्याधिष्ठात्री देवीत्यर्थः । ततः तत्र गृहे तत्समाश्रये तस्य गृहस्य आश्रये नरनार्य्यादयः सर्व्वे नित्यं सुखमयाः सुखिनः वसन्ति वासं कुर्व्वन्ति ।

२० । स्तोत्राणीति । अस्य गृहस्य कुड्यानि अपि सन्ततं स्तोत्राणि उदीरयिष्यन्ति, तत्रत्याः जनाः तानि तत्तद्वस्तुजातानि नवविधेः नवविधानस्य प्रभुं महीययन्ति गौरवान्वितं कुर्व्वन्ति ।

इति गृहम् ।

---

१ । सम्प्रति गृहस्थानां विशेषनित्यकर्त्तव्यानि वक्तुमारभते गृहीति । गृही प्रातः प्रातःकाले प्रबुद्धः जागरितः स्यात्, नात्युदीते न च अत्युषे नातिप्रत्यूषे । सूर्य्योदयादतीव प्राक् पश्चाद्वा न शय्यापरिहारं कुर्य्यादित्यर्थः ।

तेभ्यस्तत्र प्रमाणं हि विश्रामं, तेन सोऽलसः ।
आहूतस्तेन नाक्रोशेत् तन्द्रा चाल्पतमास्त्विति ॥ २ ॥
नवीभूतः प्रबुद्धः सन् परमेशनिदेशतः ।
स्निग्धमारुतप्रत्यग्रसौरालोकक्कतेषु सः ॥
उषाया हर्षदप्रत्यभिवादेषु परम्प्रभुम् ।
स्तुयात् क्कतश्रद्धहृदयः स्वापेनोर्ज्जस्वलः पुनः ॥ ३ ॥
उपविश्यासने जानूपरि वा दण्डवत् स्थितः ।
शंसेदसावहो धन्यो धन्यः परममङ्गल ॥
यज्जीवामि दिनन्त्वन्यतमं द्रष्टुं नयस्व माम् ।
आश्वासय च यतोऽयं स्याद्दिवसो धर्म्मशान्तिदः ॥ ४ ॥

२ । निद्राकालमुक्त्वा सम्प्रति तत्परिमाणं नातिक्रामेदित्याह सेति । अथ तेभ्यः आत्मजेभ्यः प्रभुः परमेश्वरः समष्टीरात्रमात्रस्वापं तत्परिमितकालं निद्रयातिवाहयितुं आदिशत् । किन्तत्र प्रमाणम् ? विश्रामं शारीरविश्रामं तत्र प्रमाणम् । तेन हेतुना तेन प्रभुणा आहूतः स्वापादुत्थानायेत्यर्थः स गृही अल्पतमा तन्द्रा अस्तु इति न आक्रोशेत् चीत्कारं कुर्य्यात् । चणकालमल्पनिद्रां भजामीति वदन् न शय्यायामवलुण्ठेदिति भावः ।

३ । उत्थाय किं कर्त्तव्यं तदाह नवीभूतइति । स्वापेन निद्रया पुनः ऊर्ज्जस्वलः उत्साहबलसम्पन्नः नवीभूतः नवत्वं प्राप्तः परमेशनिदेशतः परमेश्वराज्ञया प्रबुद्धः जागरितः सन् स्निग्धमारुतप्रत्यग्रसौरालोकक्कतेषु प्रातःसमीरणेन नवसूर्य्यालोकेन च क्कतेषु तज्जनितेषु उषायाः हर्षदप्रत्यभिवादेषु आनन्दवर्द्धनप्रत्यभिवादनमध्ये क्कतश्रद्धहृदयः स परं प्रभुं स्तुयात् स्तुत्या सम्भावयेत् ।

४ । उपविश्येति । आसने उपविश्य जानूपरि अथवा दण्डवत् स्थितः असौ गृही शंसेत् । किं शंसेत् ? अहो परममङ्गल मङ्गलालय परमेश्वर, धन्यः धन्यः । यत

यथैवात्मा तथा देहो व्यायामं खल्वपेक्षते।
अतो विश्वासवान् भक्त्या दिनस्य कतिचित् क्षणान्॥
नियुञ्जीत मिते, तत्र शस्तं प्रातस्तु सर्व्वथा।
पेश्यो बलयुताः शुद्धानिलानुश्वसनं यतः॥
शोणिताव्याहतगतिर्बलस्वास्थ्यविवर्द्धनम्॥ ५॥
उपेक्षया शरीरस्यात्मनिवासमुपेक्षते।
उल्लङ्घते च स विधिं परमेशप्रतिष्ठितम्॥ ६॥
स्वास्थ्यानां विधयः सर्व्वे विधयः परमेशितुः।
यस्तानुल्लङ्घते दण्डं सहते सोऽपराधजम्॥ ७॥

अन्यतमं दिनं द्रष्टुम् अहम् जीवामि। माम् आश्वासस्व आशीर्युक्तं कुरु, नयस्व सत्पथे परिचालय, यतः अयं दिवसः धर्म्मशान्तिदः स्यात् तत्सम्परिवर्द्धको भवेत्।

५। व्यायामकर्त्तव्यतामाह यथेति। यथा एव आत्मा तथा देहः व्यायामं परिचालनं खलु निश्चितम् अपेक्षते, अतः विश्वासवान् भक्त्या भक्तिपूर्व्वकम् न तु पशुवत् दिनस्य कतिचित् क्षणान् मिते परिमिते व्यायामे नियुञ्जीत नियुक्तान् कुर्व्वीत। तत्र व्यायामे प्रातस्तु सर्व्वथा शस्तं प्रशस्तकालः। यतो व्यायामात् पेश्यः बलयुताः वर्द्धित-शक्तिकाः शुद्धानिलानुश्वसनं फुप्फुसेन विशुद्धवायुपरिग्रहः, शोणिताव्याहतगतिः शोणितस्य सर्व्वदेहप्रसरणे गतिसाधनम्, बलस्वास्थ्यविवर्द्धनं शारीरबलस्य स्वास्थ्यस्य उन्नतिः। एतान्यस्य फलानि भवन्तीत्यर्थः।

६। उपेक्षां निन्दति उपेक्षयेति। शरीरस्य उपेक्षया तत्करणेन आत्मनिवासं जीवस्य वसतिभूमिम् उपेक्षते उपेक्षितां करोति। न केवलं तत्, स गृही परमेश-प्रतिष्ठितं विधिं नियमनिचयम् उल्लङ्घते उत्क्रामति।

७। विधिलङ्घनदोषमाह स्वास्थ्यानामिति। सर्व्वे स्वास्थ्यानां विधयः नियमाः परमेशितुः परमेश्वरस्य विधयः। यः जनः तान् विधीन् उल्लङ्घते उत्क्रामति, सः अपराधजं दण्डं सहते, तज्जनितदण्डभोगं करोति।

धन्यो विश्वासवान् सोऽयं यतः क्षुद्रे महत्यपि।
सेवतेऽत्र प्रभुन्तस्य देहात्मघटितान् पुनः॥
नित्यजीवनसंपृक्तान् स्वास्थ्यसम्बन्धिनोऽथवा।
निदेशान् पालयत्येष सम्यक् सत्यसमाहितः॥ ८॥
प्रातः संवादपत्राणि पठित्वातिप्रयोजनम्।
साधयित्वाथ कार्य्यञ्च स्नायाद्भक्त्यान्वहं गृही॥ ९॥
प्रत्यहं साधयेत् स्नानं मार्ज्जनं चात्मनः स च।
नद्यां वा दीर्घिकायां वा धारायन्त्रैरथालये॥ १०॥
जलं परिष्कृतं स्वास्थ्यकरं भवतु नित्यशः।
अन्यथा स्यात्तव स्नानं न शिवन्त्वशिवं महत्॥ ११॥

८। तदनुसरणकृतकृत्यतामाह धन्य इति। सोऽयं विश्वासवान् धन्यः। यतः एष सम्यक् सत्यसमाहितः क्षुद्र महति अपि विषये अत्र प्रभुं परमेश्वरं सेवते भजति। तस्य प्रभोः देहात्मघटितान् देहात्मसम्बन्धिनः नित्यजीवनसंपृक्तान् अनन्तजीवनघटितान्, अथवा स्वास्थ्यसम्पर्कीयान् निदेशान् पालयति यथायथं रक्षति।

९। प्रातरिति। प्रातः संवादपत्राणि दैनिकसंवादलिपिसाधनानि पठित्वा अथ प्रयोजनं कार्य्यञ्च साधयित्वा अन्वहं प्रत्यहं गृही भक्त्या स्नायात् स्नानं कुर्यात्।

१०। प्रत्यहमिति। स च नद्यां दीर्घिकायाम् अथवा गृहे धारायन्त्रैः जल-निर्झरणयन्त्रैः प्रत्यहं स्नानं साधयेत् आत्मनः मार्ज्जनञ्च कुर्यात्।

११। जलमिति। नित्यशः अविच्छेदेन जलं परिष्कृतं निर्म्मलं स्वास्थ्यकरं सुस्थताजनकं भवतु। तद्विरुद्धे दोषमाह, अन्यथा तव स्नानं न शिवं मङ्गलकरं स्यात्, तु किन्तु महत् अशिवम् अमङ्गलकरं भवेत्।

यावन्मलिनतां त्यक्त्वा शुद्धहृद्वासयोग्यताम् ।
यात्यङ्गमार्ज्जनीयोगात्तावन्मृज्याः कलेवरम् ॥ १२ ॥
शिरोऽभ्यङ्गं विधायाभिषिञ्च वारि सुशीतलम् ।
तस्योपरि तु शैत्याय नवीभावाय तस्य च ॥ १३ ॥
एवं स्नानं भवेत्तुभ्यं द्वेधा तच्छिवदं परम् ।
हरेन्मालिन्यमुष्मार्णं यच्छेत्पावित्र्यनूतने ॥ १४ ॥
सत्यं स्नानस्याभिषेकोऽवगाहोऽवभृथः शुचिः ।
स्मरैतत् सततं सम्यक् परमेश्वरसन्तते ॥ १५ ॥
पूजालयमनु स्नानागारं मानय तत् सदा ।
तत्कुड्येषु च पावित्र्यं स्तुतिर्वसतु वारिषु ॥ १६ ॥

१२। यावदिति। यावत् कलेवरं देहः मलिनतां त्यक्त्वा मालिन्यं परिहाय शुद्धहृद्वासयोग्यतां विशुद्धं निर्म्मलं हृत् हृदयं तस्य वासे योग्यतां न याति प्राप्नोति, तावत् अङ्गमार्ज्जनीयोगात् मृज्याः मार्ज्जितं कुरु।

१३। शिरोऽभ्यङ्गमिति। शिरोऽभ्यङ्गं शिरसि तैलाभ्यञ्जनं विधाय तस्य शिरस उपरि सुशीतलं वारि शैत्याय शीतलतासाधनाय नवीभावाय अभिषिञ्च अभिषिक्तं कुरु।

१४। स्नानफलमाह एवमिति। एवम् एवम्प्रकारेण तत्स्नानं तुभ्यं द्वेधा परं शिवदं भवेत्। किन्तद्द्वयम्? मालिन्यं मलिनताम् उष्मार्णं, पावित्र्यनूतने पवित्रतां नूतनां नवीभूतताञ्च यच्छेत्।

१५। स्नानस्य महत्त्वमाह सत्यमिति। सत्यं परमार्थभूतं स्नानम् अभिषेकः परमात्मलाभोपायभूतस्नानविशेषः, अवगाहश्च जलावगाहनञ्च अवभृथः पवित्रव्यापारः, हे परमेश्वरसन्तते सततं नित्यमेतत् स्मर स्मृतिविषयं कुरु।

१६। ततः स्नानागारस्मानननमाह पूजालयमिति। तत् तस्मात् पूजालयम् अनु सदा स्नानागारं मानय तत्सदृशव्यवहारास्पदं कुरु। तत्कुड्येषु तस्य स्नानागारस्य भित्तिषु पावित्र्यं पवित्रता वारिषु स्तुतिः परमेश्वरप्रशंसावादश्च वसतु।

सम्भाषय जलं नित्यं सादरं भक्तिपूर्व्वकम् ।
स्वीकुर्य्यस्य मलहरे गुणेऽन्तःशुद्धिसूचनम् ॥
एवं देहमन्दिरेऽस्मिन् नीचे कृतार्थतात्मनः ।
त्वया समुपलभ्येत प्राचीने नूतनं प्रभोः ॥
वेदं महीययास्यापादयात्र पूर्णतां पुनः ॥ १७ ॥
सलिले विमलं ज्योतिः पश्य त्वं परमात्मनः ।
मातेवापः समायान्तु मार्ष्टुं त्वां शोधितुं पुनः ॥ १८ ॥
ऋग्वेदोक्तञ्च सूक्तं त्वं स्मर पूर्व्वैः प्रकल्पितम् ।
"आपोऽस्मान् मातरः शुन्धयन्तु
* * * * * * * * * * * ।
विश्वं हि रिप्रं प्रवहन्ति देवीः
उदिदाभ्यः शुचिरा पूता एमि ॥" १९ ॥

१७। वारिषु स्तुतिरिति परिस्फुटयितुमाह सम्भाषयेति। नित्यं प्रतिदिनं जलं सादरं भक्तिपूर्व्वकं सम्भाषय स्वागतीकुरु। अस्य मलहरे मालिन्यपरिहारके गुणे अन्तःशुद्धिसूचनं तत्प्रदर्शकनिदर्शनं स्वीकुरु। एवम् अस्मिन् नीचे अधमे देहमन्दिरे आत्मनः कृतार्थता कृतकृत्यता आशीरिति यावत् त्वया समुपलभ्यते समधिगम्यते। अत्र प्राचीने पुरातने वेदे अस्य प्रभोः नूतनं वेदं महीयय गौरवान्वितं कुरु पूर्णतां पुनरापादय तस्य वेदस्येति शेषः।

१८। जले परमात्मसाक्षात्कारमाह सलिल इति। सलिले जले परमात्मनः परमेश्वरस्य विमलं निर्म्मलम् अत्युज्ज्वलं ज्योतिः त्वं पश्य, पुनः अपि च त्वां मार्ष्टुं मार्ज्जितं कर्त्तुं शोधितुं विशुद्धं कर्त्तुं मातेव आपः समायान्तु आगच्छन्तु।

१९। एतत् सम्भाषणमतीव प्राचीनमित्याह ऋग्वेदोक्तमिति। पूर्व्वैः पूर्व्वपुरुषैः प्रकल्पितं निबद्धम् ऋग्वेदोक्तं सूक्तं दशममण्डलीयं सप्तदशसूक्तं दशमीं ऋचमिति यावत्

पवित्रग्रन्थसम्बद्धं देवनन्दनसाधितम्।
अभिषेकञ्च जोर्द्दाने पुण्ययुदाभुवि स्मर॥
"दिनेषु तेषु जघटे यदीशा आगमत्तदा।
जोर्द्दानसरिति प्राप्ताभिषेकः सलिलात्ततः॥
उत्थाय सोऽञ्जसादर्शद्द्यौर्द्वेधाभवदन्तिके।
कपोतमूर्त्त्या पूतात्मावातरत्तस्य चोपरि॥
त्वं मे प्रियतमः पुत्त्रो यस्मिन् प्रीतोऽस्मि सन्ततम्।
इति वाणी वदन्ती द्योरगमत्——————॥" २०॥

इति गृहस्थः।

स्मर स्मरणविषयं कुरु। आपः मातरः अस्मान् शुन्धयन्तु पवित्रान् कुर्व्वन्तु। देवी देव्यः आपः विश्वं निखिलं हि रिप्रम् अविशुद्धिं प्रवहन्ति प्रवाहवेगेनापनयन्ति अपनयन्तु वा। आभ्यः अद्भ्यः शुचिः विशुद्धः पूतः पवित्रः उदेमि उद्गच्छामि। प्रथमः पादादनन्तरम् "घृतेन नो घृताप्वः पुनन्त्वि"ति पादस्यार्थो भाष्यान्तरे यद्यपि जलविषयक एवावगम्यते तथापि विस्पष्टार्थेऽन्यविषयकप्रतीतौ परित्यक्तः।

२०। देशान्तरगतशास्त्रान्तरप्रमाणमाह पवित्रेति। जोर्द्दाने तदाख्ये स्रोतसि पुण्ययुदाभुवि पवित्रायां युदाख्यायां भूमौ पवित्रग्रन्थसम्बद्धं न तु स्वकल्पापदेशेन निन्दनीयमिति यावत् देवनन्दनसाधितम् ईशाया निष्पन्नम् अभिषेकञ्च स्मर। किन्तत् पवित्रग्रन्थोक्तं तदेवाह दिनेष्विति। तेषु दिनेषु जघटे इदं सङ्घटितम्, यत् ईशाः तदा तत्समये आगमत् आगतवान्। जोर्द्दानसरिति प्राप्ताभिषेकः गृहीताभिषेकः ततः सलिलात् जलात् अञ्जसा तत्क्षणात् उत्थाय सः अदर्शत्। किमदर्शत्? अन्तिके समीपे द्यौः अन्तरीक्षं द्वेधा अभवत्। तस्य च उपरि कपोतमूर्त्त्या पूतात्मा पवित्रात्मा अवातरत् अवतीर्णवान्। त्वं मे मम प्रियतमः पुत्त्रः यस्मिन् अहं सन्ततं नियतं प्रीतः अस्मि इति वदन्ती सुस्पष्टं भाषमाणा वाणी द्योः अन्तरीक्षात् आगमत् आगतवती।

इति गृहस्थः।

# उपासना ।

स्नात्वा मृष्ट्वा गृही वासो गृह्णीतोपासनोचितम् ॥ १ ॥
मलिनश्चापवित्रश्चेद्वासः पार्थिवचिन्तनम् ।
अप्यपावित्र्यमुद्दीप्यात्मानं बध्नाति संसृतौ ॥ २ ॥
शुद्धेन वाससा देवसाक्षात्कारोपयोगिना ।
सम्भावितात्मा प्रविश प्रभोः पूजागृहन्ततः ॥ ३ ॥
स्थाने स्वस्यासने नित्यमुपविष्टो भवात्र न ।
स्वेच्छाचारी परस्यानात्मभूतस्य समाविशन् ॥ ४ ॥

१। अधुनोपासनानियमान् वक्तुमाह स्नात्वेति । स्नात्वा स्नानं कृत्वा, मृष्ट्वा मार्ज्जनं विधाय, गृही गृहस्थः उपासनोचितं वासः वस्त्रं गृह्णीत परिदध्यात् ।

२। कथमेवं कुर्य्यात्तदाह मलिनमिति । चेत् यदि वासः वस्त्रं मलिनं अपवित्रञ्च भवतीति शेषः, तदा तत् पार्थिवचिन्तनम् ऐहलौकिकचिन्ताम् अपि च अपावित्र्यम् अपवित्रताम् उद्दीप्य उद्बोध्य आत्मानं संसृतौ संसारे बध्नाति तदधीनं करोति ।

३। ततः किं कर्त्तव्यं तदाह शुद्धेनेति । ततः तस्मात् शुद्धेन पवित्रेण देवसाक्षात्कारोपयोगिना वाससा वसनेन सम्भावितात्मा आत्मानं सम्भावितं कृत्वेत्यर्थः, प्रभोः परमेश्वरस्य पूजागृहं देवालयं प्रविश तस्मिन् प्रवेशं कुरु ।

४। आसनविषयकनियममाह स्थान इति । स्थाने निर्द्दिष्टभूमौ स्वस्य आत्मनः आसने नित्यम् उपविष्टो भव । परस्य अन्यजनस्य अनात्मभूतस्य नित्यव्यवहारेण आत्मत्वमप्राप्तवत् समाविशन् अत्र स्थानासनविषये न स्वेच्छाचारी यथेच्छाचारपरायणो भवेति शेषः ।

सम्मानयासनं तत्र प्रीतिं वह च बन्धुवत् ।
गणयोपासने सङ्गिवच्चात्र यासि तन्नय ॥ ५ ॥
आवेश्य गृहवेदीं तां पतिः पत्नी पिता सुतः ।
माता कन्या स्वसा भ्राता विशेत् स्वस्वासनेषु च ॥ ६ ॥
निमन्त्रिता बान्धवाश्चेद्युञ्जीरन्नर्च्चने तदा ।
उपविशेयुः पुरुषाः स्त्रियश्च पार्श्वयोः पृथक् ॥ ७ ॥
आसनं परिगृह्याग्रे प्रणमेद्गृहदेवताम् ॥ ८ ॥
उपासनां निर्व्वहेत गृही गाम्भीर्य्यमावहन् ।
गृहोचितगिरा तत्तद्बुद्ध्यभावानुसारतः ॥ ९ ॥

५। आसनस्यानुपेक्षणीयत्वमाह सम्मानयेति। आसनं सम्मानय मानास्पदं कुरु। तत्र प्रीतिं वह, बन्धुवत् उपासने सङ्गिवत् च गणय। यत्र यासि तत्र तत् आसनं नय। विदेशेऽपि दैनिकोपासनव्यवहृतमासनमेव व्यवहरेदित्यर्थः।

६। उपासकानामुपवेशनप्रकारमाह आवेश्येति। तां गृहवेदीम् आवेश्य पतिः, पत्नी, पिता, सुतः पुत्रः, माता, कन्या, स्वसा भगिनी, भ्राता च स्वस्वासनेषु विशेत् उपवेशनं कुर्य्यात्।

७। पतिपत्न्यादिव्यतिरिक्तानां तत्रागमने समुपवेशननियममाह निमन्त्रिता इति। अर्च्चने उपासने निमन्त्रिताः आहूताः बान्धवाः मित्राणि चेत् युञ्जीरन् योगं दद्युः, तदा पुरुषाः स्त्रियश्च पृथक् पार्श्वयोः स्वतन्त्राः भूत्वेत्यर्थः उपविशेयुः उपवेशनं कुर्य्युः।

८। उपवेशनानन्तरं प्रथमं कर्त्तव्यमाह आसनमिति। आसनं परिगृह्य उपवेशनं कृत्वा अग्रे गृहदेवतां परमेश्वरं प्रणमेत्।

९। अनन्तरमुपासनप्रणालीमारब्धुं प्रक्रमते उपासनामिति। गृही गृहस्थः गाम्भीर्य्यम् आवहन् आश्रित्य गृहोचितगिरा गृहस्थानां स्त्रीपुरुषाणाम् उपयोगिन्या भाषया तत्तद्बुद्ध्यभावानुसारतः तत्तज्जनानां बुद्धिश्च अभावश्च तदनुसारतः उपासनां निर्व्वहेत समापयेत्।

आरभ्येतोद्बोधनेन गायेयुः पुरुषास्ततः।
स्त्रीणां स्वरैरेकतानत्वापन्नैः स्तुतिप्रार्थनैः॥ १०॥
आराधना ततो यत्र स्वरूपाणि क्रमाद्विभोः।
विवृतानि धृतान्यद्धा प्रदत्तगौरवाणि च॥ ११॥
ततो ध्यानेन तान्यत्र पुण्ये परमपूरुषे।
साक्षात्क्रियेरन्नेकत्र तूष्णीम्भावेन च क्षणम्॥ १२॥
इत्येवं तं प्रभुं दृष्ट्वा सर्व्वे निर्द्दिष्टप्रार्थनम्।
मिलित्वोदीरयेयुस्ते तेष्वेकः क्रमयोगतः।
प्रभावान् स्वस्य पापानि समुल्लिख्य च प्रार्थयेत्॥ १३॥

१०। प्रारम्भिकाङ्गमाह आरभ्येति। उद्बोधनेन देवसाम्मुख्यसाधकेन वाक्यनिचयेन आरभ्येत। ततः उद्बोधनानन्तरं पुरुषाः स्त्रीणां स्वरैः एकतानत्वापन्नैः स्तुतिप्रार्थनैः गायेयुः गानं कुर्य्युः।

११। उद्बोधनसङ्गीतानन्तरमाराधनामाह आराधनेति। ततः तदनन्तरम् आराधना। तत्स्वरूपमाह यत्रेति। यत्र आराधनायां विभोः परमेश्वरस्य स्वरूपाणि "सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दरूपममृतं यद्विभाति, शान्तं शिवमद्वैतम्, शुद्धमपापविद्ध"मित्युपनिषदुक्तानि क्रमात् विवृतानि बुद्धिग्राह्यतया व्याख्यातानि, अद्धा सत्यभावेन धृतानि ह्यनुभूतानि, प्रदत्तगौरवाणि प्रख्यापितमहत्त्वानि। "सत्यं ज्ञानमनन्त"मित्यादि क्रमेणैव व्याख्या। अत्र आनन्दस्वरूपव्याख्यायां 'रसो वै सः' इति श्रुतिरनुक्तापि सैव ग्राह्या न तु 'आनन्दरूपममृतम्' तस्या जीवजगद्गतत्वात्।

१२। आराधनानन्तरं ध्यानमाह तत इति। ततः आराधनानन्तरं ध्यानेन तानि स्वरूपाणि एकत्र अत्र पुण्ये परमपुरुषे क्षणं क्षणकालं व्याप्य तूष्णीम्भावेन साक्षात्क्रियेरन् साक्षादधिगन्तव्यानि सर्व्वैरिति शेषः।

१३। ध्यानानन्तरं साधारणप्रार्थनमाह इतीति। एवं हृदि तं प्रभुं दृष्ट्वा ते सर्व्वे मिलित्वा निर्द्दिष्टप्रार्थनम् "असतो मा सद्गमये"त्याद्यनुरूपम् उदीरयेयुः। तत्र उपास-

द्वितीयस्य तु सङ्गीतस्यान्ते नामानि चेश्वितुः ।
सदीरयेयुस्त्राणानि प्रियाणि मधुराणि च ॥ १४ ॥
ऋषीन् प्राच्यान् प्रतीच्यांश्च श्रुतानि बहु मानयन् ।
महीययन् पौर्व्विकाणि ज्ञानानि वचनं पठेत् ॥ १५ ॥
ज्ञानानुरक्तिसारल्यभक्त्युत्साहेन प्रार्थनम् ।
न भारवत्त्वयत्नेन कुर्व्वीत तद्दिनस्य च ॥ १६ ॥
नवपुष्पसमं स्यात्तत् प्रत्यग्रं सुमनोहरम् ।
चिन्ताभावसमुच्छ्वासानुद्गिरन्नित्यनूतनान् ॥ १७ ॥

केषु एकः क्रमयोगतः परपरक्रमेण स्वस्य पापानि अभावांश्च समुल्लिख्य उद्दीप्य प्रार्थयेत् प्रार्थनां कुर्य्यात् ।

१४ । साधारणप्रार्थना व्यक्तिगतप्रार्थना तदन्तर्वर्त्तिसङ्गीतानन्तरं "नमोऽकिञ्चन-नाथाये"त्यादि नामोच्चारणम्, तदेवाह द्वितीयस्येति । द्वितीयस्य सङ्गीतस्य तु अन्ते ईश्वितुः परमेशस्य नामानि उदीरयेयुः । कथम्भूतानि त्राणानि परित्राणसाधकानि प्रियाणि मधुराणि च । एतानि विशेषणानि उदीरणहेतुद्योतकानि ।

१५ । प्रवचनपाठमाह ऋषीनिति । पौर्व्विकाणि पुराकालसमागतानि ज्ञानानि महीययन् महिमान्वितानि कुर्व्वन्, प्राच्यान् प्रतीच्यान् पाश्चात्यान् ऋषीन् श्रुतानि तत्त-द्ग्रन्थानि च बहु मानयन् सम्मानयन् वचनं प्रवचनं पठेत् गृहीति शेषः ।

१६ । प्रवचनपाठानन्तरं प्रार्थनमाह ज्ञानेति । न भारवत् श्रयत्नेन, तु किन्तु ज्ञानानुरक्तिसारल्यभक्त्युत्साहेन तत्तत्सम्पन्नतया तद्दिनस्य प्रार्थनञ्च कुर्व्वीत ।

१७ । किम्भूतं तत् प्रार्थनं स्यात्तदेवाह नवेति । तत् प्रार्थनं नवपुष्पसमं प्रत्यग्रं नवीनं सुमनोहरम् हृदयाकर्षकं नित्यनूतनाम् चिन्ताभावसमुच्छ्वासान् उद्गिरत् तत्त-द्व्यञ्जकमिति शेषः स्यात् । नैकविधा, किन्तु नित्योन्नतिव्यञ्जिका नवनवभावादिसम्पन्ना, नित्यनूतना प्रार्थनाऽस्माकं स्यादिति फलितार्थः ।

न शब्दाडम्बरो व्यर्थवाक्यं वा ग्रथितानि च ।
पदानि वाक्यभूतानि पुनरुक्तानि तानि च ।
विनयस्य च दैन्यस्य वाङ्मात्रेण प्रदर्शनम् ।
स्वरोऽस्वाभाविको वाथ विकृता अङ्गभङ्गयः ।
तोषयन्ति परात्मानमुपहासावमानने ।
महतो महतस्तस्य स तेभ्यो हि जुगुप्सते ॥ १८ ॥
गृह्यपूजागृहे नित्यं सत्योपासनमस्तु तत् ।
प्रार्थयन्ति च ये तत्र प्रार्थयन्तु ऋतेन च ।
हृदयेन च पूर्णेन भक्त्या भावेन सम्भ्रमैः ॥ १९ ॥
स्मरन्तु ते प्रार्थयन्ति ये तत्र यत्र केवलम् ।
प्रार्थयेरन् लभेरंस्तु नान्विष्येयुः परं प्रभुम् ।
पश्येयुस्त्विनुयुर्धर्म्मं शान्तिं श्वसितनन्दिते ॥ २० ॥

१८। प्रार्थनायां शब्दाडम्बरादिकं परिहार्य्यमित्याह न शब्दाडम्बर इति। शब्दाडम्बरः, व्यर्थवाक्यं, ग्रथितानि पदानि, वाक्यभूतानि केवलं वाक्यत्वमापन्नानि न तु हृद्गतभावव्यञ्जकानि तानि पदानि पुनरुक्तानि प्रतिदिनमेकविधत्वेनोच्चारितानि, वाङ्मात्रेण न तु हृद्गतभावेन विनयस्य दैन्यस्य च प्रदर्शनम्, अस्वाभाविकः स्वरः विकृता अङ्गभङ्गयः परात्मानं परेश्वरं न तोषयन्ति। कथं न तोषयन्ति? महतो महतस्तस्य परमेश्वरस्य तानि उपहासावमानने। स परमेश्वरः तेभ्यः जुगुप्सते हि तानि परमेश्वरसन्निधावतीव घृण्यानि।

१९। गृह्योपासनप्रार्थनमाह गृह्येति। तत् तस्मात् गृह्यपूजागृहे पारिवारिकोपासनालये नित्यं सत्योपासनम् अस्तु। ये तत्र प्रार्थयन्ति, ऋतेन सत्येन, पूर्णेन हृदयेन, भक्त्या भावेन, सम्भ्रमैश्च प्रार्थयन्तु ते इति शेषः।

२०। कथमेवं कुर्य्युरित्याह स्मरन्त्विति। ये तत्र प्रार्थयन्ति ते स्मरन्तु, यत्र न

प्रार्थयेताम्वहं चेत् किं लभध्वेऽत्र ततः फलम् ।
अवदत् स प्रभुर्योऽसौ यद्यत् प्रार्थयते प्रियम् ।
तस्मै तत् तत् प्रदास्यामि प्रणतस्य च भक्तितः ।
प्रार्थनं पापयुक्तस्य सरलं स्वीकरोम्यहम् ॥ २१ ॥
प्रार्थयत प्रतीक्षध्वमाश्वस्तहृदयाः प्रभुः ।
वक्ति यच्छति यावन्न सम्पदोऽनुग्रहस्य च ।
ज्ञानानुश्वसनानन्दपुण्यैश्चित्तं प्रपूरयन् ॥ २२ ॥
अन्यं प्रातर्वन्दनायां स्तुतौ च प्रार्थनेषु च ।
अलमाभुञ्जते तत्र सर्व्वेऽनुग्रहमीशितुः ।
परात्मानुश्वसनेन तेषामात्मा समृद्धिमान् ॥ २३ ॥

केवलं प्रार्थयेरन्, तु किन्तु लभेरन् प्रार्थितविषयम् अधिगच्छेयुः, न अन्विष्येयुः, परं प्रभुं पश्येयुः, अर्थां शान्तिं श्वसितानन्दिते श्वसितं दैवश्वसितं तत्प्रेरणानन्दितम् आनन्दश्च ते चिनियुः, सञ्चितानि कुर्य्युः ।

२१। फललाभं विना प्रार्थना निष्फलेत्याह प्रार्थयर्येति। अन्वहं प्रतिदिनं चेत् यदि प्रार्थयेत, ततः किमत्र फलं लभध्वे? स प्रभुः अवदत्, योऽसौ यद्यत् प्रियं प्रार्थयति, तस्मै तत् तत् प्रदास्यामि, भक्तितः प्रणतस्य पापयुक्तस्य च सरलं प्रार्थनम् अहं स्वीकरोमि।

२२। परमेश्वराङ्गीकारमनुसृत्य फलप्रतीक्षामाह प्रार्थयेतेति। प्रार्थयत प्रार्थनां कुरुत, प्रार्थनानन्तरम् आश्वस्तहृदयाः सन्तः प्रतीक्षध्वम् प्रतीक्षां कुरुध्वम्। प्रतीक्षाकालमाह—यावन्न प्रभुः वक्ति, अनुग्रहस्य च सम्पदः यच्छति। किं कुर्व्वन्? ज्ञानानुश्वसनानन्दपुण्यैः ज्ञानञ्च अनुश्वसनं प्रेरणा च आनन्दश्च पुण्यञ्च तैः चित्तं प्रपूरयन् परिपूर्णं कुर्व्वन्।

२३। कृतार्थतामाह अन्यमिति। प्रातः अन्यम्। एवं प्रातःकाली अन्यो भविता।

आशीर्व्वचनसङ्गीतानन्तरं प्रणमेद्भुवि ।
सम्भाषयन् धन्यवादैरनुग्रहाय तं प्रभुम् ॥ २४ ॥
शान्तिः शान्तिः शान्तिरिति वाचयध्वं मुदा ततः ॥ २५ ॥

ब्रह्मोपासना ।

—•—

वन्दनायां स्तुतौ प्रार्थनेषु च तत्र ईशितुः परमेश्वरस्य अनुग्रहं सर्व्वे जनम् अत्यर्थं आभुञ्जते, परात्मानुध्यानेन तत्प्रेरणया तेषाम् आत्मा समहिमान् भवति ।

२४ । अनन्तरमाशीर्व्वचनादिकमाह आशीरिति । आशीर्व्वचनसङ्गीतानन्तरं अनुग्रहाय तत्कृतानुग्रहार्थं धन्यवादैः सम्भाषयन् तं प्रभुं भुवि प्रणमेत् ।

२५ । शान्तिवचनमाह शान्तिरिति । ततः तदनन्तरं मुदा हर्षेण शान्तिः शान्तिः शान्तिरिति वाचयध्वम् ।

ब्रह्मोपासना ।

———

# आहारः ।

चदश्नीथात्र पशुवत् किन्नोदरपरायणाः ।
यूयं पुष्टाङ्गवृषभा मांसादाः श्वापदा इव ॥ १ ॥
ये चोदरपराः सत्यं पार्थिवाहारभोजिनः ।
अनन्तजीवनं साक्षाद्भोज्यान्यध्यात्मदर्शिनाम् ॥ २ ॥
धन्यास्ते परमेशाय पिबन्त्यश्नन्ति ये पुनः ।
देवत्वमनुपश्यन्ति दैनिकाहारवस्तुषु ॥ ३ ॥
सत्यमन्नञ्च पानीयं देवत्वानुगुणं हि ये ।
नाम्नेशस्य पिबन्त्यश्नन्त्याप्नुयुस्ते विमोचनम् ॥ ४ ॥

१। उपासनानन्तरमाहारविधिं वक्तुमाह चेदिति। चेत् यदि पशुवत् अश्नीथ, किं न यूयम्। उदरपरायणाः? यूयं पुष्टाङ्गवृषभाः, मांसादाः मांसभक्षकाः श्वापदाः हिंस्रजन्तवः इव।

२। उदरपरायणानामध्यात्मदर्शिनाञ्च भेदमाह य इति। ये च उदरपराः उदरपूरणमात्राकाङ्क्षिणः सत्यं यथार्थतः ते पार्थिवाहारभोजिनः, ऐहलौकिकेन्द्रियभोग्यपदार्थाशिनः। अध्यात्मदर्शिनां भोज्यानि अन्नानि साक्षात् अनन्तजीवनम्।

३। अध्यात्मदर्शिनां कृतार्थतामाह धन्या इति। परमेश्वराय परमेशार्थं ये पुनः अश्नन्ति पिबन्ति, दैनिकाहारवस्तुषु देवत्वं देवभावं तदधिष्ठानम् अनुपश्यन्ति, ते धन्याः।

४। अन्नादीनां देवत्वानुगुणत्वमाह अन्नमिति। सत्यं सत्यतः अन्नं पानीयञ्च देवत्वानुगुणं देवत्वगुणसम्पृक्तम्। ये ईशस्य परमेश्वरस्य नाम्ना पिबन्ति अश्नन्ति, ते विमोचनं मुक्तिम् आप्नुयुः।

चार्व्वाका इव मा भूत भोज्यपानेषु संरता:।
पिबन्त्यश्नन्ति मोदन्ते ये विनाशाय केवलम्॥ ५॥
भोजनागारकुट्टीर: प्रमत्तानान्तु जातुचित्।
इष्टानुरागिन् मा भूत्ते भोजनस्थानमश्नताम्।
विश्वासिनामोश्वरस्य भोज्यान्येष हि मन्दिरम्॥ ६॥
अभिषेकाय ते स्नानागारं कुट्टीर एष ते।
भोजनाय च पानाय चरितानां महात्मनाम्।
सुपवित्रतमौ ह्येतौ ज्ञेयावतोऽपरिष्कृत:।
एको नाप्यनयोर्द्देवाधिष्ठानवर्ज्जितो भवेत्॥ ७॥
भुत्युक्तं नियतं ह्यत्र स्मर प्रवचनन्त्विदम्।
"अश्नीथ वाथ पिवथ कुरुध्वे वाथ यत्तत:।

५। केवलं भोजनपरायणा मा भूतेत्याह चार्व्वाका इति। चार्व्वाका: भोजनपरायणा ईश्वरविमुखा इव भोज्यपानेषु संरता: मा भूत। ये चार्व्वाका: केवलं विनाशाय पिबन्ति, अश्नन्ति, मोदन्ते। अशान पिव मोदस्व इति चार्व्वाकाणां मतम्।

६। भोजनागारस्य मन्दिरवत् पवित्रस्थानत्वमाह भोजनेति। हे इष्टानुरागिन्, इष्टे परमेश्वरे अनुरागयुक्त गृहस्थ, ते तव भोजनागारकट्टीर: जातुचित् कदाचित् प्रमत्तानां पानोन्मदानान्तु भोजनस्थानं मा भूत्। एष कुट्टीर: ईश्वरस्य भोज्यानि तत्प्रदत्तान्नानि अश्नतां विश्वासिनां मन्दिरं हि भवत्विति शेष:।

७। कथं तस्य पवित्रस्थानत्वं तदेवाह अभिषेकायेति। ते स्नानागारम् अभिषेकाय, एष ते कुट्टीर: भोजनागारकुट्टीर: महात्मनां महाजनानां चरितानां पानाय भोजनाय च। एतौ स्नानागारभोजनागारकुट्टीरौ सुपवित्रतमौ ज्ञेयौ, अत: अनयो: एक: अपि न अपरिष्कृत: देवाधिष्ठानवर्ज्जित: भवेत्। एवं तौ रक्षेत् यथा देवाधिष्ठानं तत्र सर्व्वेऽनुभवेयु:।

यूयं कुरुध्वं तत् सर्व्वं महिम्ने परमेशितु:" ॥ ८ ॥
उपासनान्ते प्रविशेत् पवित्रं भोजनालयम्।
गृहस्थ: सपरीवारो भावै: प्रवचनोचितै: ॥ ९ ॥
उपविश्यासने स्वे स्वे नमेयुस्तामगोचरीम्।
भक्त्यान्नदायिनीं सर्व्वे, स एवं वाचयेत्तत: ॥ १० ॥
अन्नं ह्युपस्थितं देव आशिषा विनियोजय।
अनुगृहाण यदिदं पुनात्वस्मान् तवानुगान् ॥ ११ ॥
असंस्कृतमपूतञ्च स्पृशेन्नान्नं कदाचन।
देवस्पर्शविशुद्धान्नमश्नीयाद्भक्तिपूर्व्वकम् ॥ १२ ॥
केवलं प्रार्थनामन्त्रोच्चारणं न तु पश्यतु।
पोषणशक्तिरूपेण प्रभुस्त्वान्ने प्रतिष्ठितम्।

८। ईश्वरार्पणेन सर्व्वं कर्त्तव्यमित्याह श्रुत्युक्तमिति। श्रत्युक्तम् इदं प्रवचनं नियतं स्मर। किन्तत्? यूयम् अश्नीथ भोजनं कुरुथ वा पिबथ पानं कुरुथ, कुरुध्वं कर्म्म वा सम्पादयथ, तत् सर्व्वं परमेशितु: ईश्वरस्य महिम्ने कुरुध्वम्।

९। एतत्प्रवचनप्रयोगमाह उपासनान्त इति। उपासनान्ते प्रवचनोचितै: भावै: गृहस्थ: सपरिवार: पवित्रं भोजनालयं प्रविशेत्।

१०। सर्व्वार्ये प्रणाममाह उपविश्येति। स्वे स्वे आसने उपविश्य भक्त्या ताम् अगोचरीम् अन्नदायिनीं सर्व्वे नमेयु: नमस्कुर्य्यु:। तत: नमस्कारानन्तरं स गृही एवं वाचयेत्।

११। अन्नमिति। हे देव, उपस्थितम् अन्नम् आशिषा विनियोजय आशीर्युक्तं कुरु, अनुगृहाण अनुग्रहं कुरु, यत् इदम् अस्मान् तव अनुगान् पुनातु पवित्रान् करोतु।

१२। भक्ष्यमभक्ष्यमाह असंस्कृतमिति। असंस्कृतम् अपूतम् च अन्नम् कदाचन न स्पृशेत्। भक्तिपूर्व्वकं देवस्पर्शविशुद्धान्नम् अनुभूततदधिष्ठानमन्नम् अश्नीयात् खादेत्।

निदर्शनञ्च भोज्यस्योन्नतमस्यात्मनस्तथा ॥ १३ ॥
अत्रे तिष्ठाम्यहमिति प्रभोर्वाणीं शृणोत्वसौ ॥ १४ ॥
कालतो ध्वनितां वाणीमृषीणां शृणु तत्र तम् ।
पुत्रं स्मर परेशस्य जीवनं तस्य भक्षय ॥
तस्य मांसेन मांसञ्च शोणितेन च शोणितम् ।
कुरु यन्नित्यकालं हि वयं त्वयि वसाम च ॥ १५ ॥
अशानान्न' मुखन्त्वश्नात्युच्छिन्निष्टरसान् यथा ।
अभ्यन्तरस्थः पुरुषः पुण्यं प्रेम च साधुताम् ।
अश्नात्वानन्दमृषिषु परे चिनोतु जीवनम् ॥ १६ ॥

१३ । अत्रे भगवदधिष्ठानदर्शनमाह केवलमिति । न केवलं प्रार्थनामन्त्रोच्चारणं तु किन्तु पोषणशक्तिरूपेण प्रभुम् अन्ने प्रतिष्ठितञ्च पश्यतु । तथा आत्मनः उन्नतमस्य भोज्यस्य निदर्शनञ्च पश्यतु । पुण्यादिकं हि आत्मनो भोज्यम्, अन्नं तन्निदर्शनं भवत्विति फलितार्थः ।

१४ । तदीश्वरवाणीश्रवणमाह अन्नइति । अहम् अन्ने तिष्ठामीति प्रभोः परमेश्वरस्य वाणीम् असौ गृही शृणोतु ।

१५ । अन्नपानेन पुत्रत्वापादानमाह कालत इति । कालतः प्रवहतः कालात् ध्वनिताम् ऋषीणां वाणीं शृणु । तेषां वाणीमाह तत्रेति । तत्र अन्ने परेशस्य परमेश्वरस्य तं प्रसिद्धं पुत्रं महर्षीशासं स्मर स्मरणविषयं कुरु । तस्य जीवनं भक्षय । तस्य मांसेन च मांसं शोणितेन च शोणितं कुरु, यद् यस्मात् वयम् ऋषयः [illegible] कालं हि त्वयि वसाम । तस्य रक्तमांसेन रक्तमांसत्वे वयं त्वयि नित्यमनवकाशं [illegible] इति तेषां तथा भणनम् ।

१६ । पुण्यादिसञ्चयमाह अशानेति । अन्नं त्वम् अशान । मुखं यथा उच्छिन्निष्ट-रसान् अश्नाति तथा अभ्यन्तरस्थः पुरुषः पुण्यं प्रेम साधुताम् आनन्दञ्च अश्नातु । परे परमेश्वरे ऋषिषु जीवनं शाश्वतमिति शेषः चिनोतु सञ्चितं करोतु ।

एवमौदरिकाहारो न गृहे स्यात् परेशितु: ।
प्रात:सन्ध्याशनन्तत्र भवेदध्यात्मभोजनम् ॥ १७ ॥
एवमात्मानमात्मा हि पिबत्यश्नाति तेन तु ।
महाजनोपदिष्टेन श्रुत्यातिमानितेन च ॥ १८ ॥
मितव्यय-मिताचार-स्वास्थ्यतत्त्वानुसारत: ।
गृहस्थानां भोजनानि नियम्यानि च कृत्स्नश: ॥ १९ ॥
सर्व्वविधामिताचारं त्यज त्वद्भोजनव्यय: ।
आयान्नियमितादत्र कदाचिन्नातिरिच्यताम् ॥ २० ॥
मिताचारपर: स्यास्त्वं सुरां जातु न संस्पृश ।
विषमेषा त्वदर्थञ्च मृत्युश्च प्रतिवासिने ॥ २१ ॥

१७। एवमिति। एवं परेशितु: परमेश्वरस्य गृहे औदरिकाहारो न स्यात्। तत्र प्रात:सन्ध्याशनम् अध्यात्मभोजनं भवेत्।

१८। अध्यात्माहारमाह एवमिति। एवं महाजनोपदिष्टेन श्रुत्या शास्त्रेणातिमानितेन तेन पूर्व्वोक्तेन पथा आत्मा हि आत्मानम् अश्नाति पिबति।

१९। भोजननियममाह मितव्ययेति। मितव्ययस्य मिताचारस्य स्वास्थ्यतत्त्वस्य तेषामनुसारत: गृहस्थानां भोजनानि कृत्स्नश: नियम्यानि। न तानि स कदाचिदतिक्रमेदिति भाव:।

२०। संक्षेपेणोक्तं मिताचारादिकं परिस्फुटयितुमाह सर्व्वेति। सर्व्वविधामिताचारं सर्व्वप्रकारम् अपरिमिताचारं त्यज परिहर। त्वद्भोजनव्यय: तव आहारव्यय: कदाचित् अत्र नियमितात् आयात् न अतिरिच्यताम् अतिरिक्तो भवतु।

२१। मिताचारेति। मिताचारपर: स्या:, जातु कदाचित् त्वं सुरां न संस्पृश। त्वदर्थम् एषा सुरा विषम्, प्रतिवासिने प्रतिवेशिजनाय मृत्यु:। अत: सर्व्वथा तत्संस्पर्शपरिहार:।

आह प्रभुर्दुर्बलं यत् पातयेत् तत् परित्यज ॥ २२ ॥
सामान्याशनपानादौ दैन्य आत्मविनिग्रहे ।
भोगासक्तेरात्मनश्च परांश्च रक्षितुं सदा ।
धृतव्रता निवर्त्तन्तां मांसाहारात् प्रतिश्रुताः ॥ २३ ॥
अथापि बलदं स्यात्ते सामान्यन्त्विह भोजनम् ।
बलं स्वास्थ्यं समानीतं भवेत्तेन च यत् पुनः ॥ २४ ॥
स्वादु वा मधुरं भोज्यं चेदस्वास्थ्यकरं, न तत् ।
भक्षणीयं कदाचिद्यद्रोगाणां जनकं ध्रुवम् ॥ २५ ॥

२२ । तत्रे स्वर्गानिर्देशमाह आहेति । यत् दुर्बलं क्षीणचित्तं जनं पातयेत् पतितं कुर्य्यात् तत् परित्यज परिहर, प्रभुः परमेश्वरः आह ।

२३ । व्रतधारिणां मांसाहारपरित्यागमाह सामान्येति । सामान्याशनपानादौ, दैन्ये दीनतायाम्, आत्मविनिग्रहे आत्मसंयमे, आत्मनश्च परांश्च भोगासक्तेः रक्षितुम् सदा धृतव्रताः प्रतिश्रुताः तत्नियमान् पालयितुं कृतप्रतिज्ञाः मांसाहारात् निवर्त्तन्तां निवृत्ता भवन्तु ।

२४ । सामान्यमपि भोजनं पुष्टिकरगुणवत् स्वीकर्त्तव्यमित्याह तथापीति । इह ते तव भोजनं सामान्यं स्यात्, अथापि बलदं बलकरम् । यत् यस्मात् तेन सामान्याहारेण पुनः बलं स्वास्थ्यं समानीतं भवेत् । भोज्यं सामान्यमप्येवं भवेद्यत् तेन बलस्वास्थ्यवर्द्धनं स्यात् ।

२५ । परित्याज्यमाहारमाह स्वाद्विति । स्वादु वा मधुरं भोज्यं चेत् यदि अस्वास्थ्यकरम्, न तत् कदाचित् भक्षणीयम्, यत् यस्मात् ध्रुवं निश्चितं रोगाणां जनकं रोगकरम् ।

स्वास्थ्यावस्थाविशेषानुसारतो गृहवासिनाम् ।
एकैकस्य च भोज्यानां गुणो मानं विशिष्यते ॥ २६ ॥
एकविधं न ते भोज्यं प्रत्यहं, स्वादवत्ततः ।
भवेल्लभेत सर्व्वाणि पोषणानि कलेवरम् ॥ २७ ॥
गृहिणी निखिलं तत्र निर्णयेत च भोजनम् ॥ २८ ॥
पारिवारिकवैद्यस्तु पथ्यापथ्यं विनिर्द्दिशेत् ।
विधाय भोज्यञ्चाभोज्यं निवार्य्य च विधानतः ।
प्रभोः प्रतिनिधित्वेन तन्नाम्ना प्रतिषेधति ।
सोऽयं यद्‌ जातुचित् तेषु न कोपि तत्तु संस्पृशेत् ॥ २९ ॥

२६। अवस्थाविशेषाद्‌भोज्यगुणादिविशेषमाह स्वास्थ्येति। गृहवासिनां स्वास्थ्यावस्थाविशेषानुसारतः स्वास्थ्यानुयायि अवस्थानुयायि—अवस्था तु धातुभेदः—एकैकस्य भोज्यानां भोजनसामग्रीणां गुणः मानञ्च परिमाणञ्च विशिष्यते विशेषं भवेत् ।

२७। भोज्यपरिवर्त्तनमाह एकविधमिति। ते तव भोज्यं प्रत्यहं न एकविधं स्यात्। कथम्? ततः स्वादवत् स्वादु भवेत्, कलेवरं देहः सर्व्वाणि पोषणानि लभेत् । प्रत्यहमेकविधाहारभोजने न स्वादवत्ता तिष्ठति, देहश्च न पोषणानि भजते, अतः भोज्यपरिवर्त्तनं कर्त्तव्यम् ।

२८। भोज्यपरिवर्त्तनं गृहिणी कुर्य्यादित्याह गृहिणीति। तत्र गृहिणी निखिलं भोजनं निर्णयेत्, प्रत्यहं तया तन्निर्णीतं भवेत् ।

२९। पथ्यापथ्यनिर्णयमाह पारिवारिकेति। पारिवारिकवैद्यस्तु विधानतः यथाविधि भोज्यं विधाय अभोज्यं निवार्य्य पथ्यापथ्यं विनिर्द्दिशेत्। सोऽयं चिकित्सकः प्रभोः ईश्वरस्य प्रतिनिधित्वेन तन्नाम्ना परमेश्वरनाम्ना यत् प्रतिषेधति, तेषु गृहवासिषु कोऽपि न तत् तु संस्पृशेत् ।

यदाश्नीथाप्रसन्नेन मुखेनाश्नीथ नो पुनः।
प्रसन्नेन तु भावेन वक्त्रेण स्मितशोभिना॥ ३०॥
आमोदभावजनकालापास्तत्र भवन्तु च।
सद्भावास्त्वतिरिच्यन्तामाहारसमये तदा॥ ३१॥

इत्याहारः।



३०। भोजनौचित्यभावमाह यदेति। यदा यूयम् अश्नीथ, अप्रसन्नेन मुखेन नो अश्नीथ, तु किन्तु प्रसन्नेन भावेन स्मितशोभिना वक्त्रेण मुखेन।

३१। आमोदेति। तत्र भोजनकाले आमोदभावजनकालापाः भवन्तु। तदा आहारसमये सद्भावास्तु अतिरिच्यन्ताम् अतिशयेन सन्तु।

इत्याहारः।



# कर्म्म ।

विश्रम्य स क्षणं गच्छेत् कार्य्यस्थल्यां गृही ततः ॥ १ ॥
वाणिज्ये व्यवसाये वा परकार्य्येऽथवा पुनः ।
वेतनेन नियुक्तोऽयं कालोपरक्षको भवेत् ॥ २ ॥
कृतार्थत्वनिदानं हि कालसंरक्षणं सदा ।
तल्लङ्घनं विभुदृष्ट्या सत्यस्य विधिलङ्घनम् ॥ ३ ॥
परमेशं स्मर त्वं प्राक् कार्य्यारम्भात् तवान्वहम् ॥ ४ ॥
प्रलोभनानि दुःखानि परीक्षा विपदः पुनः ।
बहुलानीह कार्य्येषु प्रतियोद्धुं क्षमो न तु ॥
विना विश्वासवन्तं हि तान्यस्मिन् परमेश्वरे ॥ ५ ॥

१ । आहारानन्तरं कर्म्म, तत्तु विश्रामानन्तरमित्याह विश्रम्येति । क्षणं क्षणकालम् आहारानन्तरं विश्रम्य विश्रामं कृत्वा स गृही कार्य्यस्थल्यां कार्य्यक्षेत्रे गच्छेत् ।

२ । कालरक्षणमाह वाणिज्य इति । वाणिज्ये व्यवसाये स्वकृतानुष्ठाने वा, अथवा पुनः परकार्य्ये वेतनेन नियुक्तः अयं गृही कर्म्मप्रवृत्तौ कालोपरक्षको निर्द्दिष्टसमयसंरक्षणपरो भवेत् ।

३ । कालरक्षणफलं तल्लङ्घनदोषञ्चाह कृतार्थत्वेति । सदा कालसंरक्षणं निर्द्दिष्टसमयप्रतिपालनं हि कृतार्थत्वनिदानम् । तल्लङ्घनं कालसंरक्षणलङ्घनं विभुदृष्ट्या ईश्वरदृष्ट्या सत्यस्य विधिलङ्घनम् इच्छापूर्व्वकं सत्यस्य नियमातिक्रमणम् ।

४ । ईश्वरानुस्मरणपूर्व्वकं कार्य्यारम्भमाह परमेशमिति । तव कार्य्यारम्भात् प्राक् अन्वहं प्रतिदिनं त्वं परमेशं स्मर ।

५ । परमेश्वरस्मरणस्य प्रयोजनमाह प्रलोभनानीति । इह कार्य्येषु प्रलोभनानि

यत् कार्य्यं ते, नियुक्तो वा यत्र, त्वत्प्रभुरीश्वरः ।
तस्य दासस्तदादेशान्निर्व्वहेथा हि केवलम् ॥ १२ ॥
गृहे वा विपणौ कोषागारे वा वणिगालये ।
पण्योत्पादनशालायां पर्य्यवेक्षणवेश्मसु ॥
सभाकुट्टिमके मानक्षेत्रे वा स्मर तच्चिरम् ।
पुण्यस्थानं हि यत्र त्वं नियुक्तः कुरुषे प्रभोः ॥
इष्ट्यधीनस्य पुण्यं तत् कर्म्म यो विद्यते पुरः ॥ १३ ॥
न केवलं हि तत् स्थानं पुण्यं कर्म्म च येन च ।
साध्यते तत् साधनेन पवित्रं तत् प्रमन्यताम् ॥ १४ ॥

प्रार्थनां शृणोति, स तु त्वां विपत्काले विपदां समये परीक्षायां परीक्षामध्ये न जातु चित् कदाचित् त्यक्ष्यति ।

१२ । ईश्वरस्यैव सर्व्वत्र प्रभुत्वमाह यदिति । यत् ते तव कार्य्यं, यत्र वा त्वं नियुक्तः, त्वत्प्रभुः तव प्रभुः ईश्वरः, तस्य त्वं दासः । तदादेशात् तस्य ईश्वरस्य आदेशात् हि केवलं निर्व्वहेथाः निष्पादयेः ।

१३ । सर्व्वत्र ईश्वराधीनकार्य्यत्वं तेनैव च कृतार्थतामाह गृह इति । गृहे, विपणौ, पण्यशालायां, कोषागारे धनागारे, वणिगालये वाणिज्यागारे, पण्योत्पादनशालायां पण्यद्रव्यनिर्म्माणोत्पादनगृहे, पर्य्यवेक्षणवेश्मसु यन्त्रादिपर्य्यवेक्षणीयशिल्पिनिलयेषु, सभाकुट्टिमके मन्त्रणागृहे, मानक्षेत्रे भूपरिमाणभूमौ वा चिरं तत् पुण्यस्थानं स्मर यत्र त्वं नियुक्तः तस्य प्रभोः इष्ट्यधीनस्य पुण्यं तत् कर्म्म कुरुषे यः प्रभुः पुरः विद्यते तव पुरोभागे वर्त्तते ।

१४ । येन च तत् कर्म्म साध्यते तदपि पुण्यमित्याह न केवलमिति । न हि केवलं तत् स्थानं कर्म्म च पुण्यं येन च साधनेन शस्त्रादिना तत् कर्म्म साध्यते तत्साधनं पवित्रं प्रमन्यताम् ।

राज्ञां दण्डं स्वस्तिकादि वैद्यानां दूरवीक्षणम् ।
ज्योतिर्विदां स्थापतेयी कर्णी लेखकलेखनी ॥
मुद्राकृद्वर्णतूली च कर्म्मारागामयोघन: ।
तक्षणी सूत्रधाराणां कृषकाणाञ्च कर्त्तनी ॥
अर्पितानि प्रभो: कार्य्ये पुनाति तानि स स्पृशन् ।
तद्गौरवाय तन्नाम्ना नित्यं ये भक्तिपूर्व्वकम् ॥
व्यवहरन्ति तान्यत्र धन्यास्ते पुरुषा भुवि ॥ १५ ॥
आलस्यसंरतो मा भू: प्रयत्नाध्यवसायवान् ।
परिश्रमी प्रभो: कर्म्म कुर्व्वन् पूर्णप्रमाणत: ॥ १६ ॥
कर्म्मावहेलते वाथादिष्टान्नूनं करोति च ।
आलस्यार्थं स किं दण्डं नोपभुञ्जीत निश्चितम् ॥
उपयुक्तो वेतनाय श्रमी निद्राति योऽलस: ।
स स्तेनो हरते भोज्यद्रव्याणि तु प्रभोर्गृहात् ॥ १७ ॥

१५। साधनान्याह राज्ञामिति। राज्ञां दण्डम्, वैद्यानां चिकित्सकानां स्वस्तिकादिशास्त्रविशेषा:, ज्योतिर्व्विदां दूरवीक्षणम्, स्थापतेयी कर्णी, लेखकानां लेखनी, मुद्राकृतां वर्णतूली, कर्म्माराणां लौहकर्म्मकाराणाम् अयोघन:, सूत्रधाराणां तक्षणी, कृषकाणां कर्त्तनी शस्यच्छेदनशस्त्रम्, तानि सर्व्वाणि साधनानि प्रभो: कार्य्ये अर्पितानि, स प्रभु: स्पृशन् पुनाति पवित्राणि करोति। ये जना: भक्तिपूर्व्वकं तानि साधनानि तद्गौरवाय तस्य प्रभो: गौरवाय तन्नाम्ना व्यवहरन्ति ते पुरुषा भुवि धन्या: ।

१६। आलस्यपरिहारमाह आलस्येति। आलस्यसंरतो मा भू:। प्रभो: कर्म्म पूर्णप्रमाणत: कुर्व्वन् प्रयत्नाध्यवसायवान् परिश्रमी भव ।

१७। आलस्यपरायणो दण्डभागित्याह कर्म्मेति। कर्म्म अवहेलसे अथवा आदि-

अनियतश्रमं नात्र कुर्य्यात् कुर्व्वन् परिश्रमम् ।
समाहन्तु विनिद्राति मासमेकं कदाचन ॥
नैरन्तर्य्येण चोत्साहेनापरिचयिणा पुनः ।
कुर्य्यात् कर्म्मान्ततो व्याप्य होराणां सप्त चान्वहम् ॥ १८ ॥
सम्पूर्णपरिसंख्यानं दातुमादिष्टवान् प्रभोः ।
भृत्यत्वस्य च तन्मानस्यात्र यत् कुरुते स च ॥
दैहिकीं मानसीं शक्तिं नियुङ्क्ते स कथं पुनः ।
परिमाणेन वा केन सर्व्वथा तस्य नित्यशः ॥ १९ ॥
क्रोधस्य च विरक्तेश्च कारणात् श्रमसम्भवात् ।
समभावं सदा रक्ष निर्जीवैकविधत्वतः ॥
नवोद्यमं नवोत्साहं नूतनत्वं सदातनम् ॥ २० ॥

ष्टान् न्यूनं च करोति, स किम् आलस्यार्थं निश्चितं द्रव्यं नोपभुञ्जीत । असौ परिश्रम-पर वेतनाय भृतये उपयुक्तः । यः अलसः सन् निद्राति स स्तेनः चौरः प्रभोः गृहात् भोज्यद्रव्याणि तु हरते ।

१८ । श्रमनियममाह अनियतेति । नात्र अनियतश्रमं नियमविरहितं श्रमं कुर्य्यात् । अनियममभिदधाति—कदाचन समाहन्तु परिश्रमं कुर्व्वन् मासमेकं विनिद्राति । किं कुर्य्यात्तदाह—नैरन्तर्य्येण अपरिचयिणा उत्साहेन पुनः अनन्तः अन्वहं प्रतिदिनं होराणां सप्त व्याप्य कर्म्म कुर्य्यात् ।

१९ । कर्म्मणः परिसंख्यादाने दायित्वमाह सम्पूर्णेति । परमेश्वरसन्निधौ भृत्यत्वस्य, यत्कुरुते तन्मानस्य च, स कथं केन वा परिमाणेन दैहिकीं मानसीं शक्तिं नियुङ्क्ते सर्व्वथा तस्य नित्यशः सम्पूर्णपरिसंख्यानं दातुम् आदिष्टवान् ।

२० । कर्म्मजनितविरक्त्यादेर्निराकरणमाह क्रोधस्येति । श्रमसम्भवात् श्रमजनि-

उद्दीप्यन्ते यदि तव कर्म्मकाले प्रवृत्तय: ।
रुष्टं क्रुद्धं च हृदयमीर्षायुक्तञ्च गर्व्वितम् ॥
धनलोभाद्यदि किञ्चिदसत्यं न्यायवर्ज्जितम् ।
कर्त्तुं प्रलोभितो वाथ प्रार्थय प्रभुसन्निधौ ॥
तत्क्षणान्मनसोच्चार्य्य त्रायस्व मां परेश्वर ।
सांसारिकत्वात् पापाच्च निवर्त्तय परात्पर ॥
पित: संरक्ष मां स्वस्थं विमोचय धनार्ज्जनात् ।
मुक्तिदात: सदा भृत्यं तव शाधि च मां प्रभो ॥ २१ ॥
नियतं हृष्टमनसा कुरु कृत्यं त्वमात्मन: ।
सन्ततेऽध्यवसायस्य प्रभो: क्षेत्रे परिश्रम: ॥
सानन्दस्त्वां शुद्धतमं सुस्थं प्रज्ञं करिष्यति ।
दिव्यजीवनमस्थं हि तेनेहामुत्र सेत्स्यति ॥ २२ ॥

तात् विरक्त: क्रोधस्य च कारणात् सदा समभावं रक्ष । निर्व्विवेकविधत्वत: एकविध-कर्म्मकरणजनितश्राद्धात् नवोद्यमं नवोत्साहं सदातनं नूतनत्वं रक्षेति शेष: ।

२१ । क्रोधादिप्रवृत्तिनिवारणोपायमाह, उद्दीप्यन्त इति । यदि कर्म्मकाले तव प्रवृत्तय: उद्दीप्यन्ते, हृदयं यदि रुष्टं क्रुद्धम् ईर्षायुक्तं गर्व्वितञ्च अथवा धनलोभात् यदि असत्यं न्यायवर्ज्जितं किञ्चित् कर्त्तुं प्रलोभित:, तत्क्षणात् मनसोच्चार्य्य प्रभुसन्निधौ प्रार्थय । प्रार्थनाप्रकारमाह, हे परमेश्वर, मां त्रायस्व, हे परात्पर, सांसारिकत्वात् पापाच्च मां निवर्त्तय, पित:, मां स्वस्थं प्रकृतिस्थं रक्ष, हे मुक्तिदात:, धनार्ज्जनात् मां विमोचय, हे प्रभो, मां तव भृत्यं सदा शाधि शासितं कुरु ।

२२ । कर्म्मफलमाह नियतमिति । हे अध्यवसायस्य सन्तते, नियतं सततं हृष्ट-मनसा हृष्टचित्तेन त्वम् आत्मन: कृत्यं कर्म्म कुरु । प्रभो: क्षेत्रे सानन्द: परिश्रम: त्वां

सत्यः परिश्रमः पूजा नित्यशक्तिः स्तुतिर्नतिः।
इच्छाशक्तेर्महत्यास्तु स्तुद्रया सत्क्रियासु च॥
क्रियाशक्त्या क्रियाशक्तेर्योगोऽस्माकं यतो भवेत्॥ २३॥
देवहीनोऽल्पविश्वासी कार्य्यक्षेत्रे तु गच्छति।
प्रत्येति स च खिन्नेन भाराक्रान्तेन चेतसा॥ २४॥
ये सेवन्ते प्रभुन्तस्यानन्दस्तेषामुपर्य्यसौ।
नित्यं ते विनिवर्त्तन्ते कार्य्यक्षेत्रात् प्रगाय च।
तन्नाममहिमानञ्च कृतज्ञहृष्टमानसाः॥ २५॥

इति कर्म्म।



समर्थं यद्दत्तमं प्रश्नं करिष्यति। तेन परिश्रमेण इह अमुत्र दिव्यजीवनशस्यं हि सेत्स्यति सिद्धं भविष्यति।

२३। कर्म्मार्च्चनयोरभेदभावमाह सत्य इति। सत्यः परिश्रमः नित्यशक्तिः पूजा, अस्माकं स्तुद्रया इच्छाशक्त्या महत्याः इच्छाशक्तेः स्तुतिः नतिः, सत्क्रियासु च क्रियाशक्त्या यतः अस्माकं क्रियाशक्तेः योगः भवेत्।

२४। अविश्वासिनः परिणाममाह देवहीन इति। अल्पविश्वासी देवहीनः स खिन्नेन भाराक्रान्तेन चेतसा कार्य्यक्षेत्रे गच्छति प्रत्येति च।

२५। विश्वासिनां परिणाममाह य इति। ये प्रभुं सेवन्ते तेषां उपरि तस्य प्रभोः असौ आनन्दः वर्त्तते इति शेषः। ते कृतज्ञहृष्टमानसाः तन्नाममहिमानञ्च प्रगाय नित्यं कार्य्यक्षेत्रात् विनिवर्त्तन्ते।

इति कर्म्म।



# आमोदः।

कार्य्यानन्तरमामोदमन्विच्छेच्छुद्धदूषितम् ॥ १ ॥
परिश्रमस्तथामोदः कार्य्यं विश्रान्तिरेव च।
उभे शुद्धतमे देवभावानुरञ्जिते यतः ॥ २ ॥
एकैकदासतः कार्य्यं यथा पूर्णप्रमाणतः।
अस्माकं प्रभुरन्विच्छत्यादत्ते च ददाति च ॥
पूर्णप्रमाणमानन्दमृद्धं प्रतिजनोचितम्।
नरनारीषु बालेषु चामोदं विदधाति सः ॥ ३ ॥
आमोदार्थं हि कार्य्यं यो जहाति स तु निन्दितः।
यः करोति सदा कार्य्यं हर्षविश्रामवर्ज्जितम् ॥
समाधिभुवि कश्चित् संवसत्याजीवनं यथा।
शोकचिह्नानि नित्यानि धत्तेऽत्र च यदृच्छया ॥ ४ ॥

१। परिश्रमानन्तरमामोदमाह कार्य्यानन्तरमिति। कार्य्यानन्तरं तद्दिनसमुचित-कर्म्मानुसरणानन्तरं शुद्धो अदूषितम् अनपचयकरम् आमोदं सुखवर्द्धकक्रीड़ादिकम् अन्विच्छेत् स्वाभिलाषविषयं कुर्य्यात्।

२। कथं तत् कुर्य्यादित्याह परिश्रम इति। यतः परिश्रमः तथा आमोदः, कार्य्यं विश्रान्तिः विश्राम एव च उभे शुद्धतमे पवित्रतमे, देवभावानुरञ्जिते देवगुण-सम्पन्ने।

३। एकैकेति। अस्माकं प्रभुः ईश्वरः यथा एकैकदासतः पूर्णप्रमाणं कार्य्यम् इच्छति आदत्ते च, तथा पूर्णप्रमाणम् आनन्दं ददाति च। स प्रभुः नरनारीषु बालेषु च प्रतिजनोचितम् ऋद्धं समृद्धिसम्पन्नम् आमोदञ्च विदधाति।

४। कार्य्यत्यागेनामोदत्यागेन च निन्दित इत्याह आमोदार्थमिति। यः आमो-

न स्वर्गः शोकिभिः सृष्टो नातिभारार्पकः प्रभुः ॥ ५ ॥
विषण्णता न पावित्र्यं न त्राणं क्रन्दनं तथा ॥ ६ ॥
कुरु कर्म्म यथाकालं हसाथेत्याह स प्रभुः ॥ ७ ॥
यथा श्रमो देवशक्त्यर्पनं श्रेयं तथा पुनः ।
आनन्दस्य च देवस्यामोदः पूजनमेव हि ॥ ८ ॥
विश्वासिनो यथा सोऽसौ करोति कुरुतानिशम् ।
नन्दति स्मितशोभीशो नन्दत स्मितसम्भृताः ॥ ९ ॥

दार्थम् आमोदानुसरणनिमित्तं कार्य्यं जहाति परिहरति स तु निन्दितः निन्दाभाजनम् । सदा यः हर्षविश्रामवर्ज्जितं कार्य्यं करोति स च निन्दित इति शेषः । कीदृशोऽयं जनः ? यथा कश्चित् जनः समाधिभुवि शवसमाधानस्थाने संवसति, आजीवनम् च नित्यानि शोकचिह्नानि च यदृच्छया धत्ते ।

५ । कथमेवं भवति तदाह नेति । स्वर्गो न शोकिभिः शोकयुक्तैः सृष्टः, न तत्र शोकात्तानां निवास इति भावः । प्रभुः परमेश्वरः न अतिभारार्पकः, वहनासमर्थाय अतिमात्रं भारं नार्पयतीति यावत् ।

६ । विषादं क्रन्दनञ्च निन्दति विषण्णतेति । विषण्णता न पावित्र्यं शुद्धता, तथा क्रन्दनं न त्राणं विमुक्तिः ।

७ । कथमेवं भवति तदाह कुर्व्विति । यथाकालं यथासमयं कर्म्म कुरु, अथ यथाकालं हस इति स प्रभुः परमेश्वरः आह । ईश्वराज्ञाविरोधाद्विषण्णतादेर्निन्दा ।

८ । आमोदः परमेश्वरपूजनमित्याह यथेति । श्रमः परिश्रमः यथा देवशक्त्यर्पनं देवस्य परमेश्वरस्य शक्तेः अर्पनं, तथा पुनः आमोदः देवस्य ईश्वरस्य आनन्दस्य पूजनम् एव हि ।

९ । कर्म्मण्यामोदे चेश्वर एवानुसर्त्तव्य इत्याह विश्वासिन इति । हे विश्वासिनः, सोऽसौ ईशः परमेश्वरः यथा करोति तथा यूयम् अनिशं कुरुत । स्मितशोभी परमेश्वरः नन्दति, स्मितसम्भृताः यूयं नन्दत ।

ते धन्याः पुरुषा येषु शक्तिस्तस्य करोति च।
आनन्दः परमेशस्य प्रचिनोति च नित्यदा ॥ १० ॥
आमोदेषु च भोगेषु सदा सर्व्वविधेष्विह।
स्वर्गीयं शोभतां पुण्यं स्मितश्चौष्ठाधरोपरि ॥ ११ ॥
भोगाधिक्यं जहाहीदमपवित्रं करोति च।
हृदयं लघुचित्तत्वमापाद्येन्द्रियवश्यताम् ॥ १२ ॥
अन्विष्यन्तीन्द्रियाधीनाः सुरासु प्रमदासु च।
भोगसुखं विनश्यन्ति सहसात्यतिचारतः ॥ १३ ॥
पापात्मकाद्दयादस्माद्भोगासक्तेः स्वरूपकात्।
ज्ञानवन्तो जुगुप्सन्ते दूरे तिष्ठन्ति सर्व्वथा ॥ १४ ॥

१०। ईश्वरस्य भक्तेरानन्दस्य चाविर्भावे कृतार्थतामाह ते धन्या इति। ते पुरुषाः धन्याः येषु तस्य ईश्वरस्य भक्तिश्च करोति क्रियां विदधाति, येषु च नित्यदा तस्य परमेश्वरस्य आनन्दः प्रचिनोति प्रचयमाप्नोति।

११। तत्र पुण्यप्राधान्यमाह आमोदेष्विति। सदा निरन्तरम् इह सर्व्वविधेषु भोगेषु आमोदेषु च स्वर्गीयं पुण्यं पवित्रं स्मितञ्च ओष्ठाधरोपरि शोभताम्।

१२। तत्र परित्याज्यमाह भोगाधिक्यमिति। भोगाधिक्यं जहाहि परित्यज। इदम् भोगाधिक्यं हृदयम् अपवित्रं करोति, लघुचित्तत्वम् आपाद्य कृत्वा इन्द्रियवश्यताम् इन्द्रियाधीनतां करोति जनयति।

१३। इन्द्रियाधीनताफलमाह अन्विष्यन्तीति। इन्द्रियाधीनाः सुरासु प्रमदासु च भोगसुखम् अन्विष्यन्ति, सहसा च अतिचारतः विनश्यन्ति।

१४। ज्ञानवन्तः किं कुर्व्वन्ति तदाह पापात्मकादिति। दयात् अस्मात् पापात्मकात् भोगासक्तेः स्वरूपकात् विनश्यन्तीति वचनात् मारकात् ज्ञानवन्तः जुगुप्सन्ते, सर्व्वथा दूरे तिष्ठन्ति।

मा द्यूते ह्लादमन्वेषीर्नाशदारिद्र्यकृद्धि तत् ॥ १८ ॥
मा विश्वसीर्विचारे त्वमात्मनः प्रार्थय प्रभोः ।
निर्णेतुञ्च नियन्तुञ्च दैनिकामोदमन्यथा ॥
आत्यन्तिकविपद्विघ्नमुखे धावसि निश्चितम् ॥ १९ ॥
निर्द्दोषक्रीडनं सर्व्वविधमाश्रय यत् तव ।
शरीरस्य च चित्तस्य सुखदं भवति ध्रुवम् ॥ २० ॥
विविधानि च तान्यत्र सन्ति यत् परिवर्त्तय ।
आमोदानेकधात्वं तद्वर्त्तुमस्फूर्त्तिकृत् सदा ॥ २१ ॥

१८। द्यूतक्रीडापरिहारमाह मा द्यूत इति। द्यूते ग्लहपूर्व्वकक्रीडायां ह्लादम् आमोदं मा अन्वेषीः। कथम्? तत् द्यूतं नाशदारिद्र्यकृत्, ततो हि सर्व्वस्वं विनश्यति, दारिद्र्यञ्चायाति।

१९। ईश्वरप्रेरणानुविधं क्रीडानुसरणं कर्त्तव्यमित्याह, मा विश्वसीरिति। आत्मनः विचारे त्वं मा विश्वसीः। दैनिकामोदं निर्णेतुं नियन्तुञ्च प्रभोः समीपे प्रार्थय। अन्यथा निश्चितम् आत्यन्तिकविपद्विघ्नमुखे धावसि। बहवो नश्यन्त्यात्मरुच्यनुक्रमेणामोदानुसरणेन। अतः प्रार्थनया तदवधारणोपदेशः।

२०। सामान्यतः किंविधं क्रीडनमनुसर्त्तव्यं तदाह निर्द्दोषेति। सर्व्वविधं निर्द्दोषक्रीडनम् आश्रय, ध्रुवं निश्चितं यत् तव शरीरस्य चित्तस्य च सुखदं भवति।

२१। एकविधक्रीडनानुसरणं निषेधति विविधानीति। यत् यस्मात् तानि निर्द्दोषक्रीडनानि विविधानि च सन्ति, अतः आमोदान् परिवर्त्तय। कथम्? सदा तत् अस्फूर्त्तिकृत् एकधात्वं वर्त्तुम्। एकविधक्रीडनानुसरणेन न स्फूर्त्तेः सम्भावना, अतस्तत्परिवर्त्तनम्।

सम्भोगविषयेषूत्तमं शुद्धतमं स्मृतम् ।
दिव्यधाम धराधाम्नि सङ्गीतं सत्यमेव हि ॥ २२ ॥
दिव्यवार्त्ताहरा सेयं दिव्यकन्या सुशोभना ।
सङ्गीतिः शोकसंहर्त्री क्लान्त्युत्कण्ठाहरा पुनः ॥
वात्योपमाः प्रवृत्तीश्च शान्तयित्री प्रलोभनात् ।
रक्षित्र्यानन्दसंदात्री भक्त्युच्छ्रासप्रवर्धिनी ॥ २३ ॥
शोच्योऽनयार्थभोगाभिप्रायेऽपकर्षतीह ताम् ।
कामवर्द्धनगीतेषु मोदते योऽनुरागवान् ॥
वाराङ्गनास्वरताने स्वस्यात्मानं परस्य च ।
सङ्गीतनाम्ना चाकृष्य विनाशयति मन्दधीः ॥ २४ ॥
सङ्गीतेषु च देवत्वं सत्यं तिष्ठति मङ्गला ।

२२। सङ्गीतं प्रशंसति सम्भोगेति। सम्भोगविषयेषु सङ्गीतम् उत्तमम् शुद्धतमम् स्मृतम् विज्ञेयम्। सत्यं सत्यतः एव हि धराधाम्नि दिव्यधाम। सङ्गीतमेवेयं धरा दिव्यधाम्ना स्पर्द्धते।

२३। कथं प्रशंसनीयं स्यादाह दिव्येति। सा इयं सङ्गीतिः दिव्यवार्त्ताहरा स्वर्गदूती, सुशोभना दिव्यकन्या, शोकसंहर्त्री शोकार्त्तानां शोकप्रशमिका, क्लान्त्युत्कण्ठाहरा क्लान्तेः उत्कण्ठायाः उच्छेदिका, वात्योपमाः झञ्झामरुत्सदृशीः प्रवृत्तीः शान्तयित्री प्रशमयित्री, प्रलोभनात् रक्षित्री आत्मनि मग्नानाम् अन्यत्र चित्तप्रसरस्य वारयित्री, आनन्दसंदात्री, भक्त्युच्छ्रासप्रवर्द्धिनी भक्त्युच्छ्वासान् वर्द्धयतीति सा तथा।

२४। सङ्गीतापव्यवहारं निन्दति शोच्य इति। स शोच्यः, यः मन्दधीः इह तां सङ्गीतिम् अनयार्थभोगाभिप्राये अनयः अनीतिः अर्थानां विषयाणां भोगः तयोः अभिप्राये अपकर्षति दूषयति, कामवर्द्धनगीतेषु मोदते, वाराङ्गनास्वरताने अनुरागवान्, स्वस्य परस्य च आत्मानं सङ्गीतनाम्ना च आकृष्य विनाशयति।

बहुयन्त्रैकतानेषु हारितायां सरस्वती ॥
सङ्गीतमाताऽदृश्यैक्यरूपोत्कृष्टस्वरस्य च ॥ २५ ॥
अतो मानय सङ्गीतं गीतवादित्रसञ्चयम् ।
पवित्रवस्तुसन्दोहोचितेन सम्भ्रमेण च ॥
नित्यं व्यवहरानन्दशान्त्यैक्यमेलनेन च ।
स्वर्गीयं गीतं सम्पूर्णं करोत्वीश्वरकेतनम् ॥ २६ ॥
चेत् सम्भवः कदा मित्रां सङ्गीतेन च मेलय ।
ध्यानेन च तथामोदं रङ्गभूमौ हि मानसम् ॥
विशुद्धतममानन्दमन्विष्य नाटकेषु च ॥ २७ ॥

२५। सङ्गीतेष्वीश्वराधिष्ठानमाह सङ्गीतेष्विति। सत्यं सत्यतः सङ्गीतेषु च देवत्वं तिष्ठति। बहुयन्त्रैकतानेषु उत्कृष्टस्य मधुरस्य स्वरस्य च हारितायां मङ्गला सङ्गीतमाता अदृश्या ऐक्यरूपा सरस्वती तिष्ठतीति शेषः। सर्व्वमसामञ्जस्यमपनुद्य सामञ्जस्यानयनमेवास्याः कार्य्यमत एवेयं नित्यैक्यरूपत्वेन परिगण्यते।

२६। अतस्तत्सम्माननमाह अत इति। अतः अतएव सङ्गीतं मानय। गीतवादित्रसञ्चयं गानवाद्ययन्त्राणां समूहं पवित्रवस्तुसन्दोहोचितेन सम्भ्रमेण यथान्यपवित्रवस्तुनिचयं प्रति सम्मानना भवति तद्रूपेण नित्यं व्यवहर। स्वर्गीयं गीतं कर्त्तृ ईश्वरकेतनम् परमेश्वरगृहम् आनन्दशान्त्यैक्यमेलनेन च सम्यक् पूर्णं करोतु। प्रतिगृहं सङ्गीतेन आनन्दः शान्तिरैक्यं सम्मिलनञ्च विराजन्ताम्।

२७। अभिनयजनितामोदं प्रशंसति चेदिति। चेत् यदि सम्भवः, कदा कस्मिंश्चित् समये रङ्गभूमौ हि सङ्गीतेन च मित्रां ध्यानेन च तथा आमोदं मेलय एकीकुरु। नाटकेषु च मानसं विशुद्धतमम् आनन्दम् अन्विष्य।

नाटकस्य तु शक्तिर्हि महती मङ्गलाय च ।
स्वस्योपकृतयेऽन्यस्य धन्या ये योजयन्ति ताम् ॥ २८ ॥
उदहार्षीद्बहून् पापयुक्तान् सामाजिकान् बहून् ।
कुत्सितव्यवहारांश्च समशोधयदर्हितम् ॥
शोकेन हृदयं हृष्टमकार्षीद्रजनीमुखम् ।
आलस्यवर्द्धनं प्रोत्साहितं युवकसंहतिम् ॥
अरण्यातिचरणादात्मनश्च हृतोद्यमान् ।
अजागरयदद्धा तान्नवीने जीवने पुनः ॥ २९ ॥
सङ्गच्छध्वमतो यूयं युवानो बहुकौतुकाः ।
आमोदाय पुनर्ज्ञानोचिताय सायमुत्तमम् ॥
अभिनयत नूत्नं वा प्राचीनं ज्ञानवर्द्धनम् ।
नाट्यं सामाजिकामोदं दत्त स्वेभ्यश्च तं वरम् ॥ ३० ॥

२८। नाटकं प्रशंसति नाटकस्येति। नाटकस्य शक्तिः हि महती। ते धन्याः ये स्वस्य मङ्गलाय अन्यस्य च उपकृतये तां योजयन्ति।

२९। नाटकशक्तिं विवृणोति उदहार्षीदिति। बहून् पापयुक्तान् उदहार्षीत् पापमुक्तान् कृतवती, बहून् सामाजिकान् कुत्सितव्यवहारांश्च समशोधयत्। शोकेन अर्हितं निपीडितं हृदयं हृष्टं हर्षयुक्तम् आलस्यवर्द्धनं रजनीमुखं सायङ्कालं प्रोत्साहितं प्रकृष्टोत्साहयुक्तम् अकार्षीत्, युवकसंहतिं युवकनिचयम् अतिचरणात् अरण्येन हृतोद्यमान् तान् आत्मनश्च पुनः नवीने जीवने अद्धा सत्यम् अजागरयत्।

३०। अभिनयाय प्रोत्साहयति सङ्गच्छध्वमिति। हे युवानः, ज्ञानोचिताय आमोदाय बहुकौतुकाः यूयम्, अतः अतएव सङ्गच्छध्वम् मिलिताः भवत। सायं सायङ्काले ज्ञानवर्द्धनं प्राचीनं नूत्नं नूतनं वा नाट्यम् अभिनयत। स्वेभ्यः आत्मभ्यः आत्मीयेभ्यश्च तं वरं श्रेष्ठं सामाजिकामोदं दत्त।

सावहिता यथा मा भूत् प्रमत्तत्वमथापि वा।
उन्मार्गप्रस्थितानाञ्च नराणामिह सङ्गतिः॥
नारीणां वा ह्यपवित्रदृश्यं चित्तविदूषकम्।
नीतिशैथिल्यकृद् यच्च स्वास्थ्यहृत् कृत्यभित्तथा॥ ३१॥
नाट्यशालां वस्तुजातमर्पयत परात्मने।
क्रीड़तास्य विद्यमाने चाभिनयत गायत॥
नृत्यतैवं महिम्ना यन्नाट्येश्वरोऽत्र युज्यते॥ ३२॥
सायं सम्मिलनं गीतवाद्येन तद्विनाथ वा।
ग्रामोचितप्रमोदोत्सो दृढ़बन्धुत्वबन्धनम्॥

३१। तत्र तान् सावहितान् करोति सावहिता इति। यूयं सावहिताः भवतेतिशेषः; यथा प्रमत्तत्वं मद्यपानविह्वलत्वम् अथापि वा उन्मार्गप्रस्थितानां नराणां नारीणां वा सङ्गतिः सम्मेलनम्, अपवित्रदृश्यम्, यच्च चरित्रदूषकम्, नीतिशैथिल्यकृत्, स्वास्थ्यहृत्, तथा कृत्यभित् उन्नतमकर्त्तव्यविनाशकरं तत् इह मा भूत्।

३२। ईश्वरार्पणेनाभिनयः कर्त्तव्य इत्याह नाट्यशालामिति। नाट्यशालां वस्तुजातं तत्सम्पर्कीयवस्तुसमूहं परात्मने परमेश्वराय अर्पयत। अस्य परमेश्वरस्य विद्यमाने समीपे एवं क्रीड़त अभिनयत गायत नृत्यत यत् अत्र नाट्यशालायां नाट्येश्वरो भगवान् महिम्ना युज्यते। भगवन्महिमप्रचारभूमिर्हि नाट्यशाला, अतः उद्दहार्थोद्दबहन् पापयुक्तानित्यादीनां सङ्गतिः।

३३। सायं सम्मिलनमाह सायमिति। गीतवाद्येन सह अथवा तद्विना सायं सम्मिलनं ग्रामोचितप्रमोदोत्सः ग्रामोचितः यः प्रमोदः तस्य उत्सः प्रभवस्थानम्, दृढ़बन्धुत्वबन्धनं तेन बन्धुत्वबन्धनं दृढ़ं भवतीति तथा, सौभ्रात्रयभाकाङ्क्षावर्द्धनम् भ्रातभाव-

सौभ्रात्रशुभकाङ्क्षासंवर्द्धनं ज्ञानदं पुनः।
विज्ञानादिकसम्भूततत्त्वसंग्रहणं परम् ॥ २३ ॥
संलापः प्रचुरानन्दहर्षसद्रसभूः स तु।
सर्व्वेषां सुलभो हस्तलग्न एव निरन्तरम् ॥ २४ ॥
यूयं यदा क्षणः प्राप्तः सङ्गच्छध्वं तदैव हि।
समालपत सत्कृत्यलाभकृद्विषयेषु च ॥
चिन्ता भावांश्च श्रेष्ठान् संव्यतिहरध्वमत्र च।
समदुःखसुखत्वञ्च स्नेहं सौमनस्येन तु ॥ २५ ॥

इत्यामोदः।

---

शुभशंसित्ववर्द्धकम्, ज्ञानदम्, परं श्रेष्ठं विज्ञानादिकसम्भूततत्त्वसंग्रहणम्, यतो विज्ञानादि-समुत्पन्नतत्त्वसंग्रहो भवतीति तथा।

२४। आलापजनितामोदमाह संलाप इति। संलापः प्रचुरानन्दहर्षसद्रसभूः ततः प्रभूतः आनन्दः हर्षः विग्रहरसागमश्च भवति। स तु सर्व्वेषां सुलभः निरन्तरं हस्तलग्न एव। न तत्र कस्यचित् कश्चित् प्रयास इति भावः।

२५। आलापार्थं सम्मिलनं समुचितमित्याह यूयमिति। यूयं यदा क्षणः समयः प्राप्तः तदा एव हि सङ्गच्छध्वं मिलिता भवत। सत्कृत्यलाभकृद्विषयेषु च संलपत। अत्र संलापे चिन्ताः श्रेष्ठान् भावान् स्नेहं समदुःखसुखत्वञ्च सौमनस्येन संव्यतिहरध्वम् अन्योन्यं समर्पयत।

इत्यामोदः।

# अध्ययनम् ।

प्राक् सायमशनादर्व्वाग्वाध्येतुं विनियोजय ।
अवकाशन्तु सद्ग्रन्थान् प्रबन्धान् समयोत्थितान् ॥ १ ॥
अपेक्षते यथा देहश्चात्मा सञ्चालनं मनः ।
तथैव कर्षणं येन भवेयुर्वृत्तयोऽस्य च ॥
सुस्था बलयुताः सञ्चिनुयुर्ज्ञानमृतं महत् ॥ २ ॥
मा भूदध्ययनं व्यर्थमथालाभकरं तव ।
एवं न जातु भवतु नीतिं यत्ते विदूषयेत् ॥ ३ ॥
ग्रन्थाः सङ्गिसमाश्चित्तमुपांशु दूषयत्यसौ ।
असत्साहित्यनिचयः कुसङ्गिन इवात्र तु ॥

१। अध्ययनमाह प्रागिति। सायं सायङ्काले अशनात् प्राक् अर्व्वाक् पश्चात् वा अवकाशं कार्य्यानुष्ठानविरहितसमयं सद्ग्रन्थान् समयोत्थितान् प्रबन्धान् अध्येतुं विनियोजय।

२। कथमित्याह अपेक्षत इति। यथा देहः आत्मा च सञ्चालनं व्यायामसाधनरूपम् अपेक्षते, तथैव मनः कर्षणं नियतं सञ्चिन्तनाध्ययनादिकम् अपेक्षते इति शेषः। येन कर्षणव्यापारेण अस्य मनसः वृत्तयः सुस्थाः बलयुताः भवेयुः महत् ज्ञानम् ऋतं सत्यं सञ्चिनुयुः सञ्चितं कुर्य्युः।

३। सफलं तदध्ययनं भवितुमर्हतीत्याह मा भूदिति। तव अध्ययनं व्यर्थम् अथ अलाभकरं मा भूत्। जातु कदाचित् एवं न भवतु यत् ते तव नीतिं विदूषयेत् प्रदुष्टां कुर्य्यात्।

४। सद्ग्रन्थाध्ययनकारणमाह ग्रन्था इति। ग्रन्थाः सङ्गिसमाः सहचरसदृशाः। असौ असत्साहित्यनिचयः कुसङ्गिन इव उपांशु गोपनतः दूषयति हृदयमिति शेषः।

सद्ग्रन्था ऋषिसंसर्गसमाः सद्गुणसत्फलाः ॥ ४ ॥
रहःसखः शिक्षको हि ज्ञानदो ग्रन्थ आत्मनः ॥ ५ ॥
ओष्ठाधरौ विना सोऽयं प्राचुर्य्येण प्रयच्छति ।
उपदेशान् विना पाणिं प्रोञ्छत्यश्रूणि शोकिनाम् ॥ ६ ॥
मनोमतानां ग्रन्थानामालयं स निजालये ।
रचेत् समर्पयेज्ज्ञानाधिष्ठात्रे परमात्मने ॥ ७ ॥
आर्थोपायानुसारेण समृद्धिमन्तमप्यसौ ।
कुर्य्यात् संग्रहणेनात्र ग्रन्थानामुपयोगिनाम् ॥ ८ ॥
स पारिवारिको ग्रन्थालयः क्षुद्रो भवत्वसौ ।
मनोमततमानान्तु स्वाधारोऽस्तु च पूर्व्वजैः ॥

विपर्य्यये अत्र सद्ग्रन्थाः ऋषिसंसर्गसमाः सद्गुणसत्फलाः, यथा ऋषीणां संसर्गात् सद्गुणसत्फललाभः तथा तैः साधुग्रन्थैरिति फलितार्थः ।

५ । ग्रन्थानां सखित्वमुपदेष्टृत्वमाह रहःसख इति । ज्ञानदः ग्रन्थः आत्मनः रहःसखः शिक्षको हि ।

६ । कथमुपदेष्टृत्वं बन्धुत्वमित्याह ओष्ठाधराविति । ओष्ठाधरौ विना सोऽयं ज्ञानदः ग्रन्थः प्राचुर्य्येण उपदेशान् सत्परामर्शान् प्रयच्छति प्रकृष्टरूपेण ददाति, पाणिं करं विना शोकिनां शोकग्रस्तानाम् अश्रूणि प्रोञ्छति मार्ष्टि ।

७ । ग्रन्थसंग्रहमाह मनोमतानामिति । स गृही निजालये निजगृहे मनोमतानां ग्रन्थानामालयं रचेत्, तञ्च ज्ञानाधिष्ठात्रे परमात्मने समर्पयेत्, तदाज्ञा उत्सृजेत् ।

८ । आर्थेति । आर्थोपायानुसारेण अर्थागमाद्यनुरूपेण असौ गृही तं ग्रन्थनिलयम् उपयोगिनां ग्रन्थानां संग्रहणेन अत्र समृद्धिमन्तं कुर्य्यात् ।

९ । स इति । स पारिवारिकः ग्रन्थालयः क्षुद्रो भवतु, न किन्तु मनोमतानां ग्रन्थानामिति शेषः स्वाधारः प्रकृष्टाधारः अस्तु । अपि च युगे युगे पूर्व्वजैः ज्ञानिभिः

उक्तानां लिखितानाञ्च ज्ञानिभिस्तैर्युगे युगे ।
समुत्सृजतु सद्ग्रन्थयुक्तं ग्रासं मनोरमम् ॥ ९ ॥
संग्रहे विविधत्वन्ते विस्तृतञ्चास्तु यत्तव ।
यथाहारो विभिन्नः स्यात्तथा मानस एव च ॥
मनोगतानां भिन्नानां स्वादानामिह सम्मतः ॥ १० ॥
विज्ञानञ्चाथ साहित्यं धर्म्मशास्त्रञ्च दर्शनम् ।
इतिहासो जीवनी च काव्यं नाटकमेव च ॥
वृत्तान्ता भ्रमणानां महार्ष्टान्तास्तथा नैतिकाः ।
उपदेशा भक्तितत्त्वग्रन्थाश्च श्रुतयोऽपि च ॥
विविधानाञ्च जातीनामेते स्युस्तव संग्रहे ॥ ११ ॥

उक्तानां लिखितानाञ्च सद्ग्रन्थयुक्तं मनोरमं ग्रासं समुत्सृजतु । ततः प्राचीनज्ञानिजनोक्तिनिबन्धनसद्ग्रन्थां नितरां प्रवहत्विति सरलार्थः ।

१० । संग्रहे विविधत्वमाह संग्रह इति । संग्रहे विस्तृतं विविधत्वञ्चास्तु । कथम् ? यत् यस्मात् तव आहारो यथा विभिन्नः दिनं दिनं बहुप्रकारः स्यात्, तथा मानसः आहारः एव च विभिन्नः सन् मनोगतानां भिन्नानां स्वादानां सम्मतः समुचितः स्यात् ।

११ । तद्विविधत्वमाह विज्ञानमिति । विज्ञानं प्रकृतितत्त्वम्, अथ साहित्यं सत्प्रबन्धादिकम्, धर्म्मशास्त्रम्, दर्शनम् तत्त्वनिर्णायकग्रन्थाः, इतिहासः इतिवृत्तम्, जीवनी जीवनवृत्तान्तः, काव्यम् कविप्रणीतग्रन्थाः, नाटकम्, भ्रमणानां वृत्तान्ता. देशभ्रमणकारिभिर्निबद्धतत्तद्देशविवरणानि । नैतिकाः नीतिविषयकाः महार्ष्टान्ताः दृष्टान्ताः, उपदेशाः, भक्तितत्त्वग्रन्थाः, अपि च विविधानां जातीनां श्रुतयः, तव संग्रहे एते स्युः । श्रुतिजातेन संग्रहपरिसमाप्तिः सर्व्वोपरि तासां श्रेष्ठत्वद्योतनाय ।

ताम् पालय प्रयत्नेन सन्तता इव सम्पदः ।
भक्त्या मानय यत् सत्त्वनिधानानि परेशितुः ॥ १२ ॥
सत्यं सर्व्वविधं दैव्यं स्मर नैतिकमेव वा ।
वैज्ञानमैतिहासं वा दैवस्यैवात्र मानभाक् ॥ १३ ॥
पाठः परिमितो मातिशयस्ते भवतु क्वचित् ॥ १४ ॥
अत्याशनमिवायं स्याद्भारः क्लान्तिकरः पुनः ।
मनसः प्रतिबध्नाति समापादनमात्मनि ॥ १५ ॥
चेत्त्वं जरयितुं शक्तो मा भूरश्नासि यद्भवेत् ।
हलाहलन्तद्रोगाणामुत्पत्तेर्हेतुरप्युत ॥ १६ ॥

१२ । सहेतुकं ग्रन्थसम्मानमाह तामिति । सन्तताः सम्पद इव ताम् प्रयत्नेन पालय, भक्त्या मानय । कथम् ? यत् यस्मात् परेशितुः परमेश्वरस्य सत्त्वनिधानानि, तेषु विनिहितानि तस्य सत्त्वानि ।

१३ । सत्यमिति । स्मर स्मरणविषयं कुरु, सर्व्वविधं सत्यं—वैज्ञानम् ऐतिहासं वा नैतिकमेव वा—दैव्यम् दैवभावसम्पन्नम् । अत्र दैवस्य परमेशस्य एव मानभाक् सत्यमिति शेषः ।

१४ । सम्यगध्ययननियमान् प्रवक्तुमाह पाठ इति । पाठः ते तव परिमितः भवतु क्वचित् अतिशयो न भवतु इति शेषः ।

१५ । तत्र कारणमाह अत्याशनमिति । अत्याशनमिव अयम् अतिरिक्तपाठः अशनो-पमया देहस्थानीयस्य मनसः क्लान्तिकरः भारः स्यात् पुनः अधिकन्तु आत्मनि समापादनं तदुपादानत्वेनान्तःसन्निवेशनं प्रतिबध्नाति । अधिकमशनं यथा परिपाकाभावात् देहोपा-दानत्वं न लभते तथातिरिक्तमध्ययनमिति फलितार्थः ।

१६ । तद्विपरीतफलमाह चेदिति । यत् त्वम् अश्नासि, चेत् यदि तत् जरयितुं जीर्णं कर्त्तुं शक्तः मा भूः, तत् अशनं हलाहलं तीक्ष्णविषं भवेत्, अपि च रोगाणाम् उत्पत्तेः हेतुः भवेदिति शेषः ।

बह्वन् ग्रससि चेद्ग्रन्थान् ग्रस्तं स्यान्मानसं तव ।
भारैः शौथल्यं शुद्धचिन्तायोग्याश्च वृत्तयः ॥ १७ ॥
पठेत् पंक्तीः कतिचिद्वाध्यायान् विद्यार्थिसत्तमः ।
प्राक् पुनःपठनात् पश्येत् समापत्तिसमापनम् ॥ १८ ॥
वृत्तान्तसंग्रहो वाथ सुखं लभ्यं न जातुचित् ।
पाठस्य चिन्तया पाको विनयो मनसः पुनः ॥ १९ ॥
चिन्ता पित्तरसस्तस्य वित्तिं स्थाने विपाचयेत् ।
वृत्तान्तांश्चरिते मेदःशोणिते ग्रन्थवर्त्ति यत् ॥ २० ॥

१७। ग्रन्थेऽशनत्वमारोपयन् आह बह्वनिति। चेत् यदि बह्वन् ग्रन्थान् ग्रससि तव मानसं भारैः ग्रस्तं शौथल्यं स्यात्। किं स्यात् पुनस्तत्फलम्? मनसो वृत्तयः शुद्धचिन्तायोग्याः शुद्धासु अज्ञानमालिन्यविरहितासु स्वस्थासु चिन्तासु अयोग्याः भवेयुरिति शेषः।

१८। पाठप्रकारमभिदधाति पठेदिति। विद्यार्थिसत्तमः कतिचित् पङ्क्तीः कतिचित् अध्यायान् वा पठेत् प्रतिदिनमिति शेषः। पुनःपठनात् प्राक् समापत्तिसमापनं यत् पठितं तत् सम्यक् आत्मस्थमभूत्, परिपाकोऽस्य सञ्जातः इति पश्येत् सावहितमालोचयेत्।

१९। वृत्तान्तेति। जातुचित् कदाचित् पाठस्य लभ्यं न वृत्तान्तसंग्रहः अथवा सुखम्। किन्तदा लभ्यम्? चिन्तया मनसः विनयः दमविशेषः पाकः परिणामः पूर्णतापादनम्।

२०। पूर्व्वोपयुक्तोपमां द्रढयति चिन्तेति। चिन्ता तस्य मनसः पित्तरसः परिपाचकरसविशेषः, वित्तिम् संवेदनं स्थाने वृत्तान्ताः चरिते वृत्ते, यत् ग्रन्थवर्त्ति तत् मेदःशोणिते विपाचयेत्।

अतोऽभिलाषः पठने श्रिवणे स्मरणेऽथवा ।
आधिक्येन तु मा भूत्ते प्राधान्ये चिन्तनस्य तु ॥
ज्ञानवृत्तिर्भवेद्येन सुस्था बलयुतोज्ज्वला ॥ २१ ॥
यद्यत् पठसि तत्तत् त्वं विचारय च चिन्तय ।
युक्त्या योजय तत्तुल्यैस्तुलयानय चोद्धृतिम् ॥
उन्नयावनयात्तत्त्वं मूलतत्त्वानि कर्षय ।
यावद्वहिःस्थं सत्यं तदान्तरत्वं न चाप्नुयात् ॥
चरित्रेण च चित्तेन समापत्तिश्च सर्व्वथा ॥ २२ ॥
शोच्यास्ते भासमाना ये नियतं ग्रन्थसागरे ।
विस्तीर्णे केवलं तत्र तृणानि कलयन्ति हि ॥ २३ ॥
ते धन्या ये निमज्जन्ति रत्नानि कलयन्ति च ॥ २४ ॥

२१। अतः किं कर्त्तव्यं तदाह अत इति। आधिक्येन अधिकपरिमाणेन पठने स्मरणे अथवा श्रवणे तव अभिलाषः मा भूत्, तु किन्तु चिन्तनस्य प्राधान्ये, येन ज्ञानवृत्तिः सुस्था बलयुता उज्ज्वला भवेत् ।

२२। यद्यदिति। यत् यत् त्वं पठसि, तत्तत् तावत् विचारय चिन्तय च, युक्त्या योजय सयुक्तिकं समर्थय, तत्तुल्यैः तुलय, उद्धृतिम् आनय तत्समाकृष्टानि सामान्यभूतानि तत्त्वानि उद्धारय। उन्नयावनयात् प्रमितितो मूलं समारोह उन्नयः, मूलात् प्रमितावरोहः अवनयः, तदुभयात् तत्त्वम् आनय, मूलतत्त्वम् कर्षय यावत् बहिःस्थं तत् सत्यम् आन्तरत्वं, चरित्रेण चित्तेन च सर्व्वथा समापत्तिम् एकीभावत्वम् न च आप्नुयात् ।

२३। एवमकृत्वा वृथाध्ययनशीलान् निन्दति शोच्या इति। ते शोच्याः ये नियतं विस्तीर्णग्रन्थसागरे भासमानाः, तत्र केवलं तृणानि हि कलयन्ति ।

२४। तद्विपरीतपथगामिनः प्रशंसति ते इति। ते धन्या ये निमज्जन्ति रत्नानि च कलयन्ति सञ्चिन्वन्ति ।

भासमानाय तच्चिन्ताशून्याय न तु कश्चन ।
समग्रग्रन्थनिलयो दत्ते लाभं दशस्वपि ॥
ज्ञानलोकन्तु शब्देषु चिन्ताशीलोऽत्र पश्यति ॥ २५ ॥
मा क्लान्तीभूयश्च शिक्षायामतिहृष्टं न जातुचित् ।
मन्यस्व तत्र चात्मानमाशेषं ज्ञानमाचिनु ॥ २६ ॥
गौरवञ्चाधिकारश्च नित्यकालं हि शिक्षणम् ।
शिक्षकस्यास्य देवस्य पादाब्जमाश्रितस्य च ॥ २७ ॥
शिक्षाविनयहेतोर्हि वयं सर्व्वे समागताः ।
भुवीति स्मर धन्यास्ते येऽतो गच्छन्ति विद्यया ॥
दीव्यन्त्योज्ज्वलयोपाधिं प्राप्तुं तत्र पुरस्कृतिम् ॥ २८ ॥
आख्यायिकाकथासु त्वं मुग्धो मा भूर्यतो मनः ।
विमोहयन्ति सुखयन्त्यस्मै दत्ते न पोषणम् ॥ २९ ॥

२५ । भासमानायेति । तत् तस्मात् समग्रग्रन्थनिलयः भासमानाय चिन्ताशून्याय जनाय न तु कश्चित् लाभं दत्ते । तु किन्तु चिन्ताशीलः अत्र दशस्वपि शब्देषु ज्ञानलोकं समग्रज्ञानजगत्पश्यति साक्षात् करोति ।

२६ । मा क्लान्त इति । शिक्षायां मा क्लान्तो भूः, तत्र शिक्षायां जातुचित् आत्मानम् अतिहृष्टं न मन्यस्व, आशेषं चरमकालपर्य्यन्तं ज्ञानम् आचिनु ।

२७ । गौरवमिति । शिक्षकस्य अस्य देवस्य परमेश्वरस्य पादाब्जमाश्रितस्य नित्यकालं शिक्षणं हि गौरवञ्च अधिकारश्च ।

२८ । शिक्षेति । वयं सर्व्वे शिक्षाविनयहेतोः हि भुवि समागता इति स्मर । ते धन्याः ये अतः पृथिव्याः दीव्यन्त्या उज्ज्वलया विद्यया तत्र परलोके पुरस्कृतिम् उपाधिं प्राप्तुं गच्छन्ति ।

२९ । आख्यायिकेति । आख्यायिकाकथासु त्वं मुग्धः मा भूः । कथं न

यस्तासु लभते मोदं भुङ्क्ते छायां हि केवलम्।
मिथ्यादर्शनसम्भूतप्रेतभूमौ वसत्यसौ॥ ३०॥
अश्लीलञ्चापवित्रञ्च साहित्यं मा स्पृश क्वचित्॥ ३१॥
नास्तिकग्रन्थनिचयात् तिष्ठेरवहितो यतः।
दारुणा भीषणा घृण्या जुगुप्सास्तेऽतिमात्रतः॥ ३२॥
मिथ्यौदार्य्यवशात्किन्त्वं विश्वासिन्नेकपादिकाम्।
अपवित्रां करोष्यत्र रक्षन् ग्रन्थांश्च ये पुनः।
तं परं चावमन्यन्तेऽस्वीकुर्व्वन्ति; स रक्षतु॥ ३३॥
त्वञ्चेत् पठसि पञ्चाणामेकं नास्तिकदूषितम्।
प्रतिवेशी तव ग्रन्थान् विंशतिं तान् पठिष्यति।
स्पर्धाक्रामकरागो, यमात्र विस्तारमाप्नुयात्॥ ३४॥

स्यात्? यतः ताः मनो विमोहयन्ति सुखयन्ति, अथ च अस्मै मनसे पोषणं पुष्टिवर्द्धनो-पादानं न ददति।

३०। य इति। यः जनः तासु आख्यायिकाकथासु मोदं लभते सोऽसौ केवलं छायां भुङ्क्ते, मिथ्यादर्शनसम्भूतप्रेतभूमौ निवसति।

३१। अश्लीलमिति। क्वचित् अश्लीलं च अपवित्रं च साहित्यं मा स्पृश।

३२। नास्तिकेति। नास्तिकग्रन्थनिचयात् अवहितः तिष्ठ। यतस्ते दारुणाः, भीषणाः, घृण्याः, अतिमात्रतः जुगुप्साः।

३३। उदारः स्यामिति बुद्ध्या न तत्सम्पर्कं कुर्य्यात् तदाह मिथ्येति। हे विश्वासिन्, किं त्वम् मिथ्यौदार्य्यवशात्—नैतदौदार्य्यं किन्तु व्यर्थस्तदभिमान इति मिथ्यात्वम्—एकपादिकाम् अध्ययनार्थकाष्ठाधारविशेषं ये ग्रन्थाः तं परं परमेश्वरम् अवमन्यन्ते अस्वीकुर्व्वन्ति तान् ग्रन्थान् अत्र रक्षन् अपवित्रां करोषि? स ईशः रक्षतु, तत्कृपया एवं माभूत्।

३४। न तैर्मम क्षतिः स्यात् प्रत्युत तत्खण्डनाय ममोद्यमः सफलो भविष्यति तत्

अतो नास्तिक्यदुष्टं तत्साहित्यं मृत्युकृद्रिपुम् ।
मत्वेश्वरस्य मर्त्त्यस्य छायां माक्राम जातुचित् ॥ ३५ ॥
ऋषीणां सर्व्वकालानां शास्त्राण्यन्येभ्य एव च ।
ग्रन्थेभ्यो मानयैष्वेव ज्ञानं गम्भीरमस्ति यत् ॥
प्रेरणाजनितं साम्प्रदायिकत्वविवर्ज्जितम् ।
भक्तिं सम्माननामेभ्यो देहि नित्यमतन्द्रितः ॥ ३६ ॥
विद्यार्थिन् भक्तिमन् पाठाध्ययनानि भवन्तु ते ।
नवविधानविज्ञानमहिम्नः संविवृद्धये ॥ ३७ ॥

इत्यध्ययनम् ।

---

कथं न मया ते पठितव्यास्तत्राह त्वामिति । त्वं चेत् नास्तिक्यदूषितं पञ्चाशमेकं पठसि, तत्र प्रतिवेशी तान् ग्रन्थान् विंशतिं पठिष्यति । न तत्र विनिवृत्तिः, अयं संक्रामकरोगः आशु विस्तारम् आप्नुयात् ।

३५ । अत इति । अतः नास्तिक्यदूषितं मृत्युकृत् तत्साहित्यम् ईश्वरस्य मर्त्त्यस्य मनुजस्य रिपुं मत्वा जातुचित् छायां माक्राम ।

३६ । ऋषीणामिति । अन्येभ्यः ग्रन्थेभ्यः सर्व्वकालानाम् ऋषीणां शास्त्राणि एव च मानय, यत् यस्मात् एष्वेव गम्भीरं ज्ञानम् अस्ति, किम्भूतम् ज्ञानम्? प्रेरणाजनितं दैवनिःश्वसितलक्षम् साम्प्रदायिकत्वविवर्ज्जितम्—एतद्धि तदसाधारणलक्षणम् । नित्यम् अतन्द्रितः अनलसः सन् एभ्यः भक्तिं सम्माननां देहि ।

३७ । विद्यार्थिन्निति । हे भक्तिमन् विद्यार्थिन् ते तव पाठाध्ययनानि नवविधान-विज्ञानमहिम्नः संविवृद्धये भवन्तु । शास्त्रविज्ञानादीनामविसंवादसाधनमेवास्यासाधारण-महिमा । अध्ययनं तद्विषयत्वयेऽध्येतरि प्रभवत्वित्यध्यायशेषे तदभिधानम् ।

---

## अथ दानम्।

न यत्र दानमीशस्य गृहं तन्न, भवत्विह।
आड़म्बरोऽर्च्चनानां वा प्रार्थनोच्चप्रतिध्वनिः॥ १॥
दानहीनो हि विश्वासः शून्या धर्म्माभिमानिता।
वन्ध्यः पादप एषोऽत्र सूते न फलमण्वपि॥ २॥
प्रकाशयति प्रेमाणं य एष पितरं प्रति।
भ्रातरं प्रति तद्धीनः कपटी वञ्चकः स तु।
विषादवाससा स्वार्थाधीनतामावृणोति यः॥ ३॥
उच्छ्वसितनदीप्रायः प्रेमास्य परमेश्वरे।
भक्तस्य तु परिस्फीतो बाधां सर्व्वां भिनत्ति च॥

१। अथ दानमाह न यत्रेति। यत्र गृहे न दानम् अस्तीति शेषः, न तत् गृहम् ईशस्य परमेश्वरस्य। इह गृहे अर्च्चनानां प्रातिदैवसिकपूजानाम् आड़म्बरः प्रार्थनायाः उच्चप्रतिध्वनिः वा भवतु। दानं विना नैतदीश्वरगृहत्वमिति भावः।

२। कथं न तदीश्वरगृहत्वमिति तदाह दानहीन इति। दानहीनो हि विश्वासः शून्या अन्तःसारविरहिता धर्म्माभिमानिता धार्म्मिकत्वप्रदर्शनम्। अत्र संसारे एषः विश्वासः वन्ध्यः फलप्रसवविहीनः पादपः वृक्षः न अण्वपि अल्पमपि फलं सूते।

३। तादृशधर्माभिमानिनां निन्द्यत्वे कारणमाह प्रकाशयतीति। य एष दानहीनो जनः पितरम् ईश्वरम् प्रति प्रेमाणं प्रीतिं प्रकाशयति प्रकटयति, भ्रातरं मनुष्यं प्रति तद्धीनः प्रेमवर्ज्जितः, स तु कपटी कपटाचारी वञ्चक शठः। योऽसौ विषादवाससा शोकचिह्नप्रकाशकवस्त्रेण—एतेन तस्य बहिः कृच्छ्रसाधनपटुत्वमुक्तम्—स्वार्थाधीनताम् स्वार्थपरत्वम् आवृणोति आच्छादितां करोति।

४। सम्प्रति छलवञ्चनाविरहितस्य भक्तस्य व्यापकप्रेमाणमाह उच्छ्वसितेति। भक्तस्य अस्य जनस्य परमेश्वरे प्रेमा उच्छ्वसितनदीप्रायः परिस्फीतः सन् सर्व्वां बाधां गतिरोधकरीं

परिव्याप्नोति विस्तीर्णे संसारे परिपूरयन् ।
स्थानान्यस्य गभीराणि प्राचुर्य्यैर्जनयन् पुनः ॥
आनन्दशस्यराशींश्च नितरां शुष्कभूमिषु ॥ ४ ॥
अतो गृही त्यजेद्दूरे जुगुप्सिताभिशापवत् ।
स स्वार्थपरतां कुर्य्यात् दानप्रेमालयं गृहम् ॥ ५ ॥
गर्व्वाभिमानतो न त्वं दरिद्राय प्रयच्छ तम् ।
मत्वा घृण्यं हि पतितं नीचमिव घृणास्पदम् ॥ ६ ॥
अभावाकुलितान् दुःखभाजस्त्वं तांश्च मानय ।
तेषां सेवां हि सौभाग्यं धर्म्मञ्च गणयात्मनः ॥ ७ ॥
ग्रहीतारन्तु दानञ्चेच्छुभयुक्तं करोति किम् ।
दातारं न शतगुणैः शुभैः सम्भावयत्यलम् ॥
दात्रे ह्यानयते स्वर्णं ग्रहीत्रे रौप्यमर्पयत् ॥ ८ ॥

भिनत्ति कूलवत् भिन्नां करोति ; विस्तीर्णे संसारे अस्य संसारस्य गभीराणि स्थानानि परिपूरयन् प्राचुर्य्यैः पुनः नितराम् अत्यर्थं शुष्कभूमिषु आनन्दशस्यराशीन् च जनयन् उत्पादयन् परिव्याप्नोति च ।

५ । गृहस्थस्य कर्त्तव्यमाह अत इति । अतः अतएव स गृही जुगुप्सिताभिशापवत् जुगुप्सितश्च अभिशापश्च तद्वत् स्वार्थपरतां दूरे त्यजेत् परिहरेत्, गृहं दानस्य च प्रेम्णश्च आलयं कुर्य्यात् ।

६ । दाने गर्व्वत्यागमाह गर्व्वेति । गर्व्वाभिमानतः घृणास्पदं पतितं नीचमिवां दरिद्रं घृण्यं मत्वा न त्वं दरिद्राय प्रयच्छ ।

७ । दरिद्रसम्माननामाह अभावेति । त्वम् अभावाकुलितान् दुःखभाजः तान् दरिद्रान् मानय सम्मानय, तेषां दरिद्राणां सेवा आत्मनः सौभाग्यं धर्म्मञ्च गणय ।

८ । कथं दरिद्रसम्माननया सौभाग्यं तदाह ग्रहीतारमिति । चेत् यदि दानं कर्त्तृ

सत्यं सत्यं हि यो यच्छेत् दरिद्राय च यच्छति।
प्रभवे खलु तस्मै तन्महीययेत तच्चिरम्॥ ९॥
मा भूर्महति दैव्ये च कर्मण्यलस ईदृशि।
क्षान्तो वा त्वमुदासीनो दातुं कामो सदा भव।
अधिकेन प्रमाणेन स्वर्णोपायैस्तथाल्पकैः॥ १०॥
दानमनियतं मा भूदचिरस्थायिनां तव।
भावानां केवलं यद्धि विकाशः क्षणिकः स्मृतः॥ ११॥
गृह्यानुष्ठानमध्ये त्वं दानं तन्नियतं कुरु।
करुणायाश्च दूतो यच्च निद्रात्वीश्वरालये॥ १२॥

गृहीतारं शुभयुक्तं करोति, किं न दातारम् अन्नम् अत्यर्थम् शतगुणैः शुभैः समन्वयति तद्युक्तं करोति। गृहीत्वे रौप्यम् अर्पयन् दानं दात्रे दातारमुद्दिश्य हि स्वर्गम् आनयते।

९। दरिद्राय दानमीश्वरायेत्याह सत्यमिति। सत्यं सत्यं हि यो दरिद्राय यच्छेत्, स प्रभवे ईश्वराय खलु यच्छति। तत् दानं तस्मै ईश्वराय, तत् तस्मात् चिरं महीययेत महिम्ना सम्भावितं कुर्य्यात् दानमिति शेषः।

१०। दानेऽनलसत्वमुपदिशति मा भूरित्यादिना। ईदृशि महति दैव्ये च देवसम्पर्कीये कर्म्मणि त्वम् अलसः क्षान्तः उदासीनः वा मा भूः। तव अल्पकैः स्वर्णोपायैः अधिकेन प्रमाणेन दातुं सदा कामो भव। यद्यपि तवाधिकः स्वर्णो न उपायो वा तथाप्यल्पेनैव स्वर्णोपायेन च अधिकपरिमाणदानकर्म्म साधयेति फलितार्थः।

११। दानेऽनियतभावपरित्यागमाह दानमिति। तव दानम् अनियतं मा भूत्, यत् हि केवलम् अचिरस्थायिनां भावानां क्षणिकः विकाशः स्मृतः। कदाचिदुच्छ्वसितहृदयेन दानं कदाचिन्न तथेन्यचिरस्थायित्वं भावानां, नियतत्वन्तु तद्विपरीतम्।

१२। दानस्य नियतत्वमाह गृह्येति। गृह्यानुष्ठानमध्ये त्वं तत् दानं नियतं

आगच्छन्ति यदा दीना व्रजन्ति शरणं तव ।
आहारश्चाश्रयं वाथ प्रार्थयन्ति सहायताम् ॥
त्वामुद्यन्तं सहायं ते पश्यन्तु, न कदाचन ।
निराशा विनिवर्त्तन्तां दृष्ट्वा द्वारमहो तव ।
रुद्धं साहाय्यविषये तवानिच्छापरं करम् ॥ १३ ॥
प्रत्येकं प्रार्थिवाक्येषु कर्णौ देहि यदप्यसौ ।
हीनतमोऽतिदुःखी च शृणु सर्वं स यद्वदेत् ।
औदार्य्यशान्तभावेन ततस्तत् त्वं विचारय ॥ १४ ॥
दानपात्रं हि चेत् सोऽयं देह्याहारञ्च वाससा ।
सम्भावय च सेवस्व रीत्यान्यविधयाऽथवा ।
आनन्दहृदयेनाथ सम्भ्रमेण च सङ्गतः ॥ १५ ॥

नियमबद्धं कुरु यत् करुणाया दूतः ईश्वरालये न निद्रातु, सदा जागरूकस्तिष्ठत्विति यावत् ।

१३ । सदा दानोन्मुखेन भवितव्यमित्याह आगच्छन्तीति । यदा दीनाः दरिद्रा आगच्छन्ति, तव शरणं व्रजन्ति प्राप्नुवन्ति, आहारम् आश्रयम्, अथवा सहायताम् प्रार्थयन्ति च, ते दरिद्राः त्वाम् उद्यन्तं सहायं पश्यन्तु ; तव द्वारं रुद्धं, साहाय्यविषये तव करम् हस्तम् अनिच्छापरं दृष्ट्वा निराशाः सन्तः कदाचन न विनिवर्त्तन्तां निवृत्ता भवन्तु ।

१४ । यस्य तस्य यत्तत्प्रार्थनासम्पूरणेनानिष्टपातम्मन्यमानं प्रत्याह प्रत्येकमिति । प्रत्येकं प्रार्थिवाक्येषु कर्णौ देहि । यदपि असौ हीनतमः अतिदुःखी च तथापि स यत् वदेत् सर्व्वं तत् शृणु, ततः श्रवणानन्तरं तत् प्रार्थिभाषितम् औदार्य्यशान्तभावेन विचारय । औदार्य्यशान्तभावेनेति विशेषणेन अविचारेण प्रार्थिवाक्ये दोषदर्शनमिथ्यात्वसंशयादिपरिहारः सूच्यते ।

१५ । एवं विचारान्तरं किं कर्त्तव्यं तदाह दानपात्रमिति । चेत् यदि सोऽयं

मासस्यार्य्योऽर्जनं त्वच परीवाराय ते यदा ।
क्रीणासि तेन गोधूमचूर्णं तण्डुलमेव च ॥
क्रीणीहि दीनसेवार्थं स्वतन्त्रं रच सञ्चये ।
समर्पितन्तत् दानाय तदर्थमेव केवलम् ॥ १६ ॥
पुरातनानि वस्त्राणि वस्तुजातानि ते पुनः ।
जीर्णानि प्रतिमासं त्वं रच यच्छेश्च तानि च ।
ये याचन्ते परित्यक्तवस्तून्येवं कृतार्थय ॥ १७ ॥
मासिकं नियमाद्यच्छ निजावस्थोचितं पुनः ।
दातव्यमिमितिष्वस्योच्छेदोऽदानं न जातुचित् ।
दारिद्र्यच्छलमाश्रित्य त्वत्तः सम्भवतूत्तरात् ॥ १८ ॥

हि दानपात्रं, आहारम् देहि, वाससा वस्त्रेण च सम्भावय, अथवा अन्यविधया रीत्या आनन्दहृदयेन अथ सम्यक् मैत्र समादरेण च सहितः सन् सेवस्व ।

१६ । दानार्थं सञ्चयमाह मासस्येति । त्वं यदा ते तव परीवाराय मासस्य आर्यो अनं शस्यादिकं क्रीणासि तत्र आर्थोऽर्जनेन सह गोधूमचूर्णं तण्डुलम् एव च दीनसेवार्थं क्रीणीहि । दानाय समर्पितं तत् क्रीतं वस्तु केवलं तदर्थम् एव दानार्थम् एव स्वतन्त्रं सञ्चये कोषे रच ।

१७ । दरिद्रजनार्थं त्यक्तवस्तुसंग्रहमाह पुरातनानीति । ते तव पुरातनानि वस्त्राणि जीर्णानि वस्तुजातानि पुनः प्रतिमासं त्वं रच । ये याचन्ते प्रार्थयन्ते तेभ्यः यच्छन् च एवं तानि परित्यक्तवस्तूनि कृतार्थय सफलानि कुरु ।

१८ । गृहे नियमितं दानमस्ति किं दातव्यसमितिषु दानेनेति निरसयन्नाह मासिक-मिति । नियमात् नियमपूर्व्वकं निजावस्थोचितं मासिकं दातव्यसमितिषु पुनः यच्छ । उत्तरात् दानानन्तरं दारिद्र्यच्छलमाश्रित्य त्वत्तः अस्य मासिकस्य उच्छेदः अदानं जातुचित् कदाचित् न सम्भवतु ।

उपाये हीनता चेत्ते समागच्छति तेन ते ।
भरणे पोषणे स्वानां कृच्छ्रञ्च समुपस्थितम् ॥
दानं तत्परिमाणेन भजेन्न्यूनत्वमेव हि ।
दीनानामधिकारन्त्वं हर्त्तुं नात्राधिकारवान् ॥ १९ ॥
धनं यदस्ति सम्पत्तिर्न ते व्येतुं यदृच्छया ।
स्वाभिप्रायाय, तन्न्यस्तं प्रभुणा त्वत्करे स्मर ॥ २० ॥
भारार्पणं स कृतवानाज्ञाञ्च स्वजनेषु च ।
दीनेभ्योऽपि परार्थं तदंशं कञ्चित् स्वभागतः ॥
मासं मासं खलु व्येतुमात्मसात्र कञ्चित्त्वया ।
कर्त्तव्यः स्वार्थहेतोः स केनापि कारणेन च ॥ २१ ॥

१९ । अवस्थाया हीनतायां किं कर्त्तव्यं तदाह उपाय इति । चेत् यदि ते तव उपाये आयादौ हीनता समागच्छति, तेन हेतुना ते तव स्वानां भरणे पोषणे कृच्छ्रं च समुपस्थितम्, तत्परिमाणेन कृच्छ्रानुरूपमिति यावत् दानं हि न्यूनत्वं भजेत् । न त्वम् अत्र दीनानाम् अधिकारं हर्त्तुम् अधिकारवान् ।

२० । कथमेवं कर्त्तव्यं तदाह धनमिति । ते तव यत् धनम् अस्ति यदृच्छया स्वाभिप्रायाय स्वीयोद्देश्यसाधनाय व्येतुं न ते सम्पत्तिः । प्रभुणा परमेश्वरेण त्वत्करे तत् न्यस्तं न्यासरूपेण रक्षितं स्मर, एतत् स्मरणविषयं कुरु ।

२१ । तत्रेश्वराभिप्रायं तदाज्ञाञ्च दर्शयति भारार्पणमिति । स प्रभुः स्वजनेषु च दीनेभ्योऽपि भारार्पणम् आज्ञाञ्च कृतवान् । किं कर्त्तुम् ? मासं मासं स्वभागतः कञ्चित् तस्य धनस्य अंशं परार्थं परोपकाराय व्येतुम् । केनापि कारणेन त्वया सः अंशः कञ्चित् स्वार्थहेतोः स्वाभिप्रायसाधनार्थम् आत्मसात् न कर्त्तव्यः ।

संख्यानं हि प्रभोर्दानकोषरक्षक देहि तत् ।
भृत्यत्वस्य तु विश्वस्तं प्राप्यं दत्तं प्रदर्शयन् ॥ २२ ॥
समाजस्योपकाराय विविधत्वं हि कर्म्मणाम् ।
दानमालिङ्गति, बहु करुणाया निदर्शनम् ॥ २३ ॥
अन्नन्तु क्षुधितायाथ पानीयं तृषिताय च ।
वसनञ्च विवस्त्राय शुश्रूषा रोगिणे पुनः ॥
विवासाय गृहं शोकतप्ताय परिसान्त्वनं ।
पितृमातृविहीनानां बालानां दुःखवारणम् ॥
विधवानाञ्च, दीनाय छात्राय पुस्तकार्पणम् ।
मठमन्दिररोगार्त्तालयस्थापनरक्षणं ॥
साधारणेषु चैतेषु दानकर्म्मसु नित्यशः ।
हृदयं बलमर्थञ्च नियोजय यथायथम् ॥ २४ ॥

२२ । तत्र दायित्वमाह संख्यानमित्यादिना । हे प्रभोः दानकोषरक्षक, तत् तस्मात् प्राप्यं दीनानामिति शेषः दत्तं प्रदर्शयन् व्ययनिर्वाहसाधनेन प्रमितम् भृत्यत्वस्य विश्वस्तं संख्यानं देहि ।

२३ । दानस्य विविधत्वमाह समाजस्येति । समाजस्य उपकाराय दानं कर्म्मणां विविधत्वम् आलिङ्गति । करुणायाः निदर्शनं बहु ।

२४ । तद्विविधत्वमाह अन्नन्विति । क्षुधिताय अन्नम्, तृषिताय च पानीयम्, विवस्त्राय वस्त्रहीनाय वसनम्, रोगिणे पुनः शुश्रूषा, विवासाय गृहहीनाय गृहम्, शोकतप्ताय परिसान्त्वनम् सान्त्वनादानम्, पितृमातृहीनानां बालानां विधवानाञ्च दुःखवारणम्, दीनाय दरिद्राय छात्राय पाठार्थिने पुस्तकार्पणम्, मठः विद्यालयः, मन्दिरं भजनालयः, रोगार्त्तालयः रोगिणां चिकित्सार्थं गृहम्, एतेषां स्थापनं रक्षणञ्च, एतेषु साधारणेषु दानकर्म्मसु नित्यशः हृदयं बलम् अर्थञ्च यथायथं नियोजय ।

असाधारणकर्म्माणि सन्तीह यत्र स प्रभुः ।
समयर्त्तुविशेषेषु नियोजयति चाज्ञया ॥ २५ ॥
दुर्भिक्षं मरको व्याधिर्देशव्याप्यग्निसंक्रमः ।
अन्यो वात्र विपत्पातो देशे वान्यत्र येन च ॥
शतं शतं मानवाश्चाकुलाः क्षुत्तृड्विमर्द्दिताः ।
विनष्टा दुःखितास्तत्र समयाक्षेपणेन च ॥
साहाय्यं कुरु दुःखानि चोपायान् विविधान् श्रयन् ।
लघुभाराणि निखिलामात्मशक्तिं नियोज्य च ॥ २६ ॥
ग्रीष्मे यदा तीक्ष्णकरस्तिग्मरश्मिस्तथार्पय ।
स्निग्धं तुषारसम्पृक्तं पानीयं मधुरं पयः ॥
सितायुक्तं तृषार्त्ताय, भक्ष्यं श्रान्तिहरं पुनः ।
विश्रामञ्च परिश्रान्तः क्लान्तः प्राप्नोतु चाश्रमः ।
स्वच्छस्यायोजनं द्वारे करुणोत्ससुतस्य ते ॥ २७ ॥

२५ । साधारणदानकर्म्मव्यतिरिक्तमप्यन्यत् प्रभोराज्ञया कर्त्तव्यमित्याह असाधारणेति । इह असाधारणकर्म्माणि सन्ति यत्र स प्रभुः समयर्त्तुविशेषेषु आज्ञया नियोजयति च ।

२६ । कानि कानि कर्त्तव्यानि समयर्त्तुविशेषघटितानि प्रदर्शयति तानि दुर्भिक्षमिति । दुर्भिक्षम् अन्नकष्टम् मरकः मारी देशव्यापी व्याधिः रोगः अग्निसंक्रमः अग्न्युत्पातः, अन्यो वा विपत्पातः अत्र देशे स्वदेशे अन्यत्र विदेशे वा, येन च दुर्भिक्षादिना शतं शतं मानवाः च आकुलाः क्षुत्तृष्णाभिपीड़िताः विनष्टाः विनाशं गताः, दुःखिताः क्लिष्टाः, तत्र समयाक्षेपणेन च कालक्षेपमकृत्वा सत्वरमिति यावत् साहाय्यं कुरु, निखिलाम् आत्मशक्तिं नियोज्य च विविधानुपायान् श्रयन् दुःखानि लघुभाराणि कुरु ।

२७ । ग्रीष्म इति । ग्रीष्मे ऋतौ तिग्मरश्मिः सूर्य्यः यदा तीक्ष्णकरः, तदा तृषा-

शीते चोष्णकरं वस्त्रं दीनाय चीरवाससे।
शीतार्त्ताय प्रयच्छ त्वं ततस्त्राणाय तत्परः॥ २८॥
दारिद्र्याय जड़त्वाय चालस्याय न जातुचित्।
यच्छोत्साहमपात्रस्वदानात्त्राणाय देहि तत्॥ २९॥
प्रशंसिष्यन्ति सर्व्वे त्वां दास्यन्ति गौरवं महत्।
दानं तूर्य्यरवेणेव मा घोषयात्मनस्ततः॥
विनीतगुणभावेन करो दीनान् भरत्वसौ।
लोकप्रियत्वं तेनाञ्च न जात्वन्विष्य चार्थय॥ ३०॥

र्त्ताय तुषारसम्पृक्तं हिमशिलासंमिश्रितं स्निग्धं सुशीतलं पानीयं जलं, मधुरं सितायुक्तं शर्करामिश्रं पयः च, अर्पय। परिश्रान्तः क्लान्तः पुनः विश्रामं शान्तिकरं मञ्चं च करुणोत्सस्रुतस्य स्वच्छस्य अम्भसः जलस्य च आयोजनं तव द्वारे प्राप्नोतु।

२८। शीते शीतर्त्तौ च शीतार्त्ताय दीनाय चीरवाससे उष्णकरं वस्त्रं ततः शीतात् त्राणाय तत्परः सन् प्रयच्छ।

२९। आलस्यादिषु शैत्साहदानं वारयति दारिद्र्यायेति। दारिद्र्याय दरिद्र-भावाय भिक्षया जीविकानिर्व्वाहं सुलभं दृष्ट्वा दरिद्रावस्थास्वीकारायेति यावत् जड़त्वाय परिश्रमविमुखत्वाय आलस्याय च सामर्थ्यसत्त्वेऽप्यनुत्साहाय अपा स्वदानात् जातुचित् कदाचित् न उत्साहं यच्छ। तत् दानं त्राणाय तन्त्रानुरूपयुक्ताय देहि।

३०। प्रशंसागौरवलोकप्रियतालाभाकाङ्क्षया दानं वारयति प्रशंसिष्यन्तीति। त्वां सर्व्वे प्रशंसिष्यन्ति महत् गौरवं दास्यन्ति, ततः तूर्य्यरवेण इव आत्मनः स्वस्य दानं मा घोषय। किं कर्त्तव्यम्? असौ करः विनीतगुणभावेन दीनान् दरिद्रान् भरतु, तेन दानेन जातु कदाचित् लोकप्रियत्वं न अन्विष्य अर्थय च।

सत्यं यद्दानशीलत्वं न हस्ते हृदये तु तत् ।
इच्छायां न क्रियायान्तत् प्रभोर्ग्राह्यः कपर्द्दकः ।
विधवाया महद्दानं न तथा हृदयान्न चेत् ॥ २१ ॥
धन्यास्ते जीवितं येषां परार्थं हि वपुर्मनः ।
ये समर्पितवन्तोऽत्र सेवायां जनसंहतेः ।
प्राप्नुयुस्ते पुरस्कारानिहामुत्र च निश्चितम् ॥ २२ ॥

इति दानम् ।

---

## अथ सम्बन्धः ।

कर्त्तव्यान्यथ सम्बन्धा गह्या: गुरुतमाः स्मृताः ।
शोच्योऽवहेलते योऽसौ पार्थिवानीति बुद्धितः ॥ १ ॥

२१ । सत्यदानशीलतामाह सत्यमिति । सत्यं यत् दानशीलत्वं तत् हृदये न तु हस्ते, न क्रियायां किन्तु इच्छायाम्, प्रभोः समीपे विधवायाः कपर्द्दकः ग्राह्यः, न तथा महत् दानं, चेत् यदि न हृदयात् । हृदयशून्यं महत् दानमप्यग्राह्यम्, क्षुद्रं तुच्छमपि न तथा यदि तत् हृदयात् प्रसूतम् ।

२२ । दाने कृतकृत्यतामाह धन्या इति । ते धन्याः येषां जीवितं जीवनं परार्थम्, ये हि वपुः शरीरं मनः अत्र जनसंहतेः सेवायां समर्पितवन्तः । निश्चितं ते इहामुत्र च पुरस्कारान् प्राप्नुयुः । इति दानम् ।

---

१ । सम्प्रति सम्बन्धीयितानि कर्त्तव्यानि वक्तुमुपक्रमते कर्त्तव्यानीति । कर्त्तव्यानि गुरुतमानि अथ अपि च गह्याः सम्बन्धाः गुरुतमाः स्मृताः । योऽसौ पार्थिवानीति सम्बन्धाः पार्थिवाः, कर्त्तव्यानि पार्थिवानीति शेषः बुद्धितः अवहेलते अवहेलां करोति, सोऽसौ शोच्यः ।

बहवः सन्ति ये गर्व्वं वहन्ति विषयेषु च ।
महत्सु च यथा योगे भक्तौ परहिते तथा ॥
वैराग्ये चायतो विस्मरन्ति क्षुद्राणि तानि च ।
दैनन्दिनानि कृत्यानि कलयन्ति च सन्ततीः ।
पितॄन् मातॄश्च पत्नीश्चोपेक्षन्त इति ते पुनः ॥ २ ॥
चरन्ति दिवि ते चोर्द्धमिति मिथ्याभिमानिनः ।
कर्त्तव्यभूमिसंस्पर्शं मन्यन्ते नीचतामिह । ३ ॥
न दोषापनयस्तेषामस्ति देवविचारणे ।
अस्थापयच्चापुनात् स सन्न्यासांश्च प्रभुः स्वयम् ॥
गृहस्थानाञ्च कृत्यान्यादिशन्नन्यभिमानतः ।
उल्लङ्घन्ते चोपयुक्तं तेभ्यो दण्डं स दास्यति ॥ ४ ॥

२ । योगादिषु गर्व्वं वहतां सन्न्यासोत्थितकर्त्तव्यपालन औदासीन्यं निन्दति बहव इति । बहवः सन्ति ये महत्सु विषयेषु यथा योगे भक्तौ परहिते वैराग्ये च गर्व्वं वहन्ति, अयतो ह्यहङ्कारवशात् क्षुद्राणि तानि दैनन्दिनानि कृत्यानि कर्त्तव्यानि विस्मरन्ति, तेन पुनः पितॄन् मातॄः पत्नीः सन्ततीः च उपेक्षन्ते इति कलयन्ति च । केवलं गर्व्ववशादेषू-पेक्षाप्रदर्शनं, वस्तुतोऽस्ति हृदये तेष्वासक्तिः, सुतरां छलनमात्रमिदमिति तत्त्वम् ।

३ । चरन्तीति । ते ऊर्द्धं दिवि चरन्ति इति मिथ्याभिमानिनः इह पृथिव्यां कर्त्तव्य-भूमिसंस्पर्शं नीचतां मन्यन्ते । तथा धर्म्माभिमानता तान् कर्त्तव्यविमुखान् करोति संसारित्वापवादभयात् कुण्ठितांश्च ।

४ । अभिमानफलमाह न दोषेति । देवविचारणे परमेश्वरविचारे तेषां दोषाप-नयः न अस्ति । कथम् ? स प्रभुः स्वयं सन्न्यासान् च अस्थापयत् अपुनात् च गृहस्थानां कृत्यानि च आदिशत्, अभिमानतः तानि ये उल्लङ्घन्ते, स प्रभुः तेभ्यः उपयुक्तं दण्डं दास्यति ।

किं मन्यसे गृहं वासमपुण्यं गर्व्वसन्तते ।
पितरौ पश्वोऽपत्यानि पशुसम्बन्धभूमयः ॥
न चास्ति तव तत्तेषु बाध्यता नीतिसङ्गता ॥ ५ ॥
मन्यस्व पुण्यसम्बन्धान् स्वान् गृहस्य तव प्रभोः ।
मानितुं सेवितुं तांश्च तेनादिष्टोऽसि नित्यशः ॥ ६ ॥
क्षुद्रतमं प्रभोर्गेहेऽस्त्ववमन्तुं न साहसम् ॥ ७ ॥
एकैकस्या बाध्यताया अणोरिह परत्र च ।
दातुं संख्यानमेव स्याः समाहूतो विनिश्चितम् ॥ ८ ॥
अहो मानव जानासि न किं कौ पितरौ भुवि ।
स्वर्गीयात् स्वर्गीयौ श्रेयौ पिता माता च ते खलु ॥ ९ ॥

५। गर्व्वितान् धिक्करोति किमिति। हे गर्व्वसन्तते, किं गृहम् अपुण्यम् अपवित्रं वासं मन्यसे, पितरौ पशौ अपत्यानि पशुसम्बन्धभूमयः किमिति शेषः, तत् तस्मात् तव तेषु नीतिसङ्गता बाध्यता न च अस्ति?

६। सम्मानमाह मन्यस्वेति। तव गृहस्य प्रभोः परमेश्वरस्य, स्वान् स्वजनान् पुण्यसम्बन्धान् मन्यस्व। तेन प्रभुणा तान् नित्यशः सेवितुं मानितुं च आदिष्टः असि।

७। क्षुद्रोऽपि नावमन्तव्य इत्याह क्षुद्रतममिति। प्रभोः गेहे क्षुद्रतमं जनम् अवमन्तुं साहसं न अस्तु।

८। तत्र दायित्वमाह एकैकस्या इति। अणोः क्षुद्राया एकैकस्याः बाध्यतायाः संख्यानं दातुम् इह परत्र च विनिश्चितं समाहूतः स्याः।

९। पितृमातृसम्मानसन्ततिसम्पर्कजनितकर्त्तव्यानि वक्तुमुपक्रमते अहो इति। अहो मानव, किं न जानासि, भुवि पितरौ मातापितरौ कौ? ते तव माता पिता च स्वर्गीयात् स्वर्गीयौ श्रेयौ।

अर्हेहि त्वं नमाग्रे च भक्तिं यच्छ च नित्यशः ।
पितरौ तौ सयत्नं हि पवित्रपुरुषाविव ॥ १० ॥
को वा महान् भुवि ह्यत्र यथा मान्यः पिता तव ।
तव माता न किं सैषा स्वादप्युच्चतमा पुनः ॥ ११ ॥
आत्मप्रतिनिधित्वेन प्रभुणा तौ नियोजितौ ।
गृहलोके पालयितुं शिशून् नेतुं च तत्पथे ॥ १२ ॥
स्वर्गस्थपितरं पश्य पितर्य्येव ससम्भ्रमम् ।
स्वर्गस्थमातृप्रेम्णोऽवतारं मातरि निश्चितम् ॥ १३ ॥
सत्यं हि पितरौ दैव्यौ पुरुषौ तौ यथा श्रुतम् ।
आह सम्माननीयौ च सेव्यौ नित्यं तथैव हि ॥
"मातरं पितरञ्चैव साक्षात् प्रत्यक्षदेवताम् ।
मत्वा गृही निषेवेत सदा सर्व्वप्रयत्नतः ॥" १४ ॥

१० । अर्हेहीति । त्वं तौ पितरौ अर्हेहि, अथ मम प्रणतो भव, पवित्रपुरुषौ इव नित्यशः सयत्नं भक्तिं यच्छ ।

११ । को वेति । तव मान्यः पिता यथा, तथा को वा अत्र भुवि महान्, तव माता, न किम् एषा सा स्वात् आकाशात् अपि पुनः उच्चतमा ।

१२ । आत्मेति । प्रभुणा परमेश्वरेण गृहलोके गृहरूपे अस्मिन् लोके शिशून् पालयितुं तत्पथे तस्य परमेश्वरस्य पथि नेतुं तौ मातापितरौ आत्मप्रतिनिधित्वेन नियोजितौ ।

१३ । स्वर्गस्थेति । पितरि एव ससम्भ्रमं स्वर्गस्थपितरम् ईश्वरं मातरि निश्चितं स्वर्गस्थमातृप्रेम्णः अवतारं पश्य ।

१४ । सत्यमिति । श्रुतं शास्त्रं यथा आह सत्यं हि तथा तौ पितरौ दैव्यौ पुरुषौ, तौ तथैव हि नित्यं सेव्यौ सम्माननीयौ च । महानिर्व्वाणतन्त्रस्याष्टमोल्लासोक्तं चतुर्विंशश्लोकं शास्त्रत्वेनोद्धरति, मातरमिति । मातरं पितरं च साक्षात् प्रत्यक्षदेवतामिव मत्वा गृही सदा सर्व्वप्रयत्नतः निषेवेत ।

पित्रोर्वशंवदाः स्यात सेवध्वं तौ समग्रया ।
शक्त्या प्रयोजनीयानि तयोर्यच्छत तुष्टये ॥
क्लेशभारं शमयत मधुरप्रेममिश्रया ।
नन्दयत तयोर्वाचा हृदयान्यात्मजन्मनः ॥ १५ ॥
कायेन मनसा नित्यं यतध्वं जीवनावधि ।
ऋणं स्नेहवतोरब्धितुल्यं शोधयितुं पुनः ॥ १६ ॥
वृद्धौ दुर्बलकायौ तौ यदा पालयतानिशम् ।
सांसारिकसुखायेह सेवया च प्रकृष्टया ॥
सन्तोषयत पुण्येनाध्ययनेन च तौ पुनः ।
आनन्दयत सङ्गीतैरुपकाराय चात्मनोः ॥ १७ ॥
न वः सेवाः शून्यगर्भा वाह्यदासत्वमेव वा ।

१५ । सन्तानानां कर्त्तव्यान्याह पित्रोरिति । हे आत्मजन्मनः सन्तयः, पित्रोः मातापित्रोः वशंवदाः स्यात, समग्रया शक्त्या तौ मातापितरौ सेवध्वम्, तुष्टये तयोः प्रयोजनीयानि यच्छत, क्लेशभारं शमयत, मधुरप्रेमनिमग्रया वाचा तयोः हृदयानि नन्दयत ।

१६ । कायेनेति । कायेन मनसा नित्यम् स्नेहवतोः मातापित्रोः अब्धितुल्यं समुद्रसदृशम् ऋणं शोधयितुं पुनः जीवनावधि यावज्जीवनं यतध्वं यत्नं कुरुत ऋणशोधनार्थं सदा परिश्रमिणो भवत ।

१७ । वृद्धाविति । यदा तौ वृद्धौ दुर्बलकायौ तदा अनिशं पालयत, इह तयोः सांसारिकसुखाय प्रकृष्टया सेवया च सन्तोषयत, तयोः आत्मनोः उपकाराय पुण्येन अध्ययनेन शास्त्रपाठेन सङ्गीतैः पुनः तौ आनन्दयत ।

१८ । न व इति । वः सेवाः शून्यगर्भाः वेतनभुजां वाह्यदासत्वमेव वा न

भवन्तु वेतनभुजामुच्छ्रासाः सन्तु ताः पुनः ।
कृतज्ञताया भक्तेश्च प्रेम्णश्चात्यन्तिकस्य च ॥ १८ ॥
अहो पुत्राश्च कन्याश्च गृहस्थानां परेशितुः ।
पित्रोः स्नेहोपरक्तेन नेतृत्वेन च शिक्षया ।
विश्वासे वर्द्धिताः प्रेम्णि साधुत्वे भवतान्वहम् ॥ १९ ॥
शारीरं मानसं तेभ्यश्चाध्यात्मं शिक्षणं सदा ।
पितरौ यच्छतं हेतोः प्रभोर्नयतमेव हि ॥ २० ॥
दूषयतेऽधिकं चैतान् लालनं ताड़नं तथा ॥ २१ ॥
स्नेहेन सुकुमारेण विनयस्य कठोरताम् ।
भाजयन्मार्द्दवं चास्तु कर्त्तृत्वं तत्तयोर्मितम् ॥ २२ ॥

भवन्तु । ताः सेवाः पुनः कृतज्ञतायाः भक्तेः च आत्यन्तिकस्य प्रेम्णः च उच्छ्रासाः सन्तु ।

१९ । अहो इति । परेशितुः परमेश्वरस्य गृहस्थानां हे पुत्राः च कन्याः च, पित्रोः मातापित्रोः स्नेहोपरक्तेन नेतृत्वेन शिक्षया च विश्वासे प्रेम्णि साधुत्वे अन्वहं प्रतिदिनं वर्द्धिताः भवत ।

२० । अधुना पित्रोः कर्त्तव्यान्याह शारीरमिति । हे पितरौ मातापितरौ, तेभ्यः कन्यापुत्रेभ्यः शारीरं शरीरसम्पर्कीयं मानसं मनःसम्पर्कीयं अध्यात्मं आत्मसम्पर्कीयं शिक्षणं यच्छतम् प्रभोः परमेश्वरस्य हेतोः निमित्तम् एव हि नयतम् विनीतान् कुरुतम् ।

२१ । दूषयत इति । एतान् कन्यापुत्रान् अधिकं लालनं तथा अधिकं ताड़नं दूषयते ।

२२ । स्नेहेनेति । सुकुमारेण स्नेहेन विनयस्य शिक्षाविशेषस्य कठोरतां मार्द्दवं भाजयत् तयोः मातापित्रोः तत्कर्तृत्वं मितं परिमितम् अस्तु ।

बलपूर्व्वकशिक्षाया रीतिं नाश्रयतं क्वचित् ।
स्वाभाविकी च सहजा सन्ततीनां भवत्वसौ ॥ २३ ॥
प्रभाववशगाः सुस्थोपचयं प्राप्तुमुत्तमम् ।
सुक्षमाः सन्तु, मा भूतं हस्तक्षेपपरावलम् ॥ २४ ॥
अकालोन्मेष आसां यन्मा भूद्बलप्रयोगतः ।
परमावहितौ स्यातन्तत्रोपायपराविह ॥ २५ ॥
स्वास्थ्यं ताभ्योऽग्रतो देहि विशुद्धमनिलं तथा ।
नित्यं प्रकृष्टमाहारं व्यायामं श्रान्तिसंहृतिम् ॥ २६ ॥
यदा हि बालिका बाला नीतिशिक्षां प्रयच्छतम् ।
यदा यौवनसम्पन्ना धर्म्मशिक्षा प्रदीयताम् ॥ २७ ॥

२३ । बलेति । बलपूर्व्वकशिक्षायाः रीतिं क्वचित् न आश्रयतम् । असौ सन्ततीनां कन्यापुत्राणाम् शिक्षा सहजा स्वाभाविकी च भवतु ।

२४ । प्रभावेति । प्रभाववशगाः पित्रोः प्रभाववशतापन्नाः उत्तमं सुस्थोपचयं प्रकृतिस्थपरिवृद्धिं प्राप्तुम् सुक्षमाः भवन्तु, अलम् अत्यर्थं हस्तक्षेपपरौ मा भूतम् ।

२५ । अकालेति । बलप्रयोगतः यत् यस्मात् आसां सन्ततीनाम् अकालोन्मेषः मा भूत्, तत्र परमावहितौ उपायपरौ इह शिक्षाविधौ स्यातम् ।

२६ । स्वास्थ्यमिति । ताभ्यः सन्ततिभ्यः कन्यापुत्रेभ्यः अग्रतः प्रथमं विशुद्धम् अनिलं वायुं तथा नित्यं प्रकृष्टं स्वास्थ्यकरम् आहारम्, व्यायामम् अङ्गचालनं श्रान्तिसंहृतिं विश्रामं देहि ।

२७ । यदेति । यदा हि बालिका बालाः, तदा नीतिशिक्षां प्रयच्छतम्, यदा यौवनसम्पन्नाः धर्म्मशिक्षा प्रदीयताम् । बाल्ये नीतिशिक्षा यौवने धर्म्मशिक्षेति फलितार्थः ।

भवन्तु वेतनभुजामुच्छ्रासाः सन्तु ताः पुनः ।
कृतज्ञताया भक्तेश्च प्रेम्णश्चात्यन्तिकस्य च ॥ १८ ॥
अहो पुत्राश्च कन्याश्च गृहस्थानां परेशितुः ।
पित्रोः स्नेहोपरक्तेन नेतृत्वेन च शिक्षया ।
विश्वासे वर्द्धिताः प्रेम्णि साधुत्वे भवतान्वहम् ॥ १९ ॥
शारीरं मानसं तेभ्यश्चाध्यात्मं शिक्षणं सदा ।
पितरौ यच्छतं हेतोः प्रभोर्नयतमेव हि ॥ २० ॥
दूषयतेऽधिकं चैतान् लालनं ताड़नं तथा ॥ २१ ॥
स्नेहेन सुकुमारेण विनयस्य कठोरताम् ।
भाजयन्मार्द्दवं चास्तु कर्त्तृत्वं तत्तयोर्मितम् ॥ २२ ॥

भवन्तु । ताः सेवाः पुनः कृतज्ञतायाः भक्तेः च आत्यन्तिकस्य प्रेम्णः च उच्छ्वासाः सन्तु ।

१९ । अहो इति । परेशितुः परमेश्वरस्य गृहस्थानां हे पुत्राः च कन्याः च, पित्रोः मातापित्रोः स्नेहोपरक्तेन नेतृत्वेन शिक्षया च विश्वासे प्रेम्णि साधुत्वे अन्वहं प्रतिदिनं वर्द्धिताः भवत ।

२० । अधुना पित्रोः कर्त्तव्यान्याह शारीरमिति । हे पितरौ मातापितरौ, तेभ्यः कन्यापुत्रेभ्यः शारीरं शरीरसम्पर्कीयं मानसं मनःसम्पर्कीयं अध्यात्मं आत्मसम्पर्कीयं शिक्षणं यच्छतम् प्रभोः परमेश्वरस्य हेतोः निमित्तम् एव हि नयतम् विनीतान् कुरु-तम् ।

२१ । दूषयत इति । एतान् कन्यापुत्रान् अधिकं लालनं तथा अधिकं ताड़नं दूषयते ।

२२ । स्नेहेनेति । सुकुमारेण स्नेहेन विनयस्य शिक्षाविशेषस्य कठोरतां मार्द्दवं भाजयत् तयोः मातापित्रोः तत्कर्त्तृत्वं मितं परिमितम् अस्तु ।

बलपूर्व्वकशिक्षाया रीतिं नाश्रयतं क्वचित्।
स्वाभाविकी च सहजा सन्ततीनां भवत्वसौ ॥ २३ ॥
प्रभाववशगाः सुस्थोपचयं प्राप्नुमुत्तमम्।
सुक्षमाः सन्तु, मा भूतं हस्तक्षेपपरावलम् ॥ २४ ॥
अकालोन्मेष आसां यन्मा भूद्बलप्रयोगतः।
परमावहितौ स्यातन्तत्रोपायपराविह ॥ २५ ॥
स्वास्थ्यं ताभ्योऽग्रतो देहि विशुद्धमनिलं तथा।
नित्यं प्रकृष्टमाहारं व्यायामं श्रान्तिसंहृतिम् ॥ २६ ॥
यदा हि बालिका बाला नीतिशिक्षां प्रयच्छतम्।
यदा यौवनसम्पन्ना धर्म्मशिक्षा प्रदीयताम् ॥ २७ ॥

२३। बलेति। बलपूर्व्वकशिक्षायाः रीतिं क्वचित् न आश्रयतम्। असौ सन्ततीनां कन्यापुत्राणाम् शिक्षा सहजा स्वाभाविकी च भवतु।

२४। प्रभावेति। प्रभाववशगाः पित्रोः प्रभाववशतापन्नाः उत्तमं सुस्थोपचयं प्रकृतिस्थपरिवृद्धिं प्राप्नुम सुक्षमाः भवन्तु, अलम् अत्यर्थं हस्तक्षेपपरौ मा भूतम्।

२५। अकालेति। बलप्रयोगतः यत् यस्मात् आसां सन्ततीनाम् अकालोन्मेषः मा भूत्, तत्र परमावहितौ उपायपरौ इह शिक्षाविधौ स्यातम्।

२६। स्वास्थ्यमिति। ताभ्यः सन्ततिभ्यः कन्यापुत्रेभ्यः अग्रतः प्रथमं विशुद्धम् अनिलं वायुं तथा नित्यं प्रकृष्टं स्वास्थ्यकरम् आहारम्, व्यायामम् अङ्गचालनं श्रान्तिसंहृतिं विश्रामं देहि।

२७। यदेति। यदा हि बालिका बालाः, तदा नीतिशिक्षां प्रयच्छतम्, यदा यौवनसम्पन्नाः धर्म्मशिक्षा प्रदीयताम्। बाल्ये नीतिशिक्षा यौवने धर्म्मशिक्षेति फलितार्थः।

न मतैर्धर्म्मशास्त्रोक्तैः कठोरैस्तु शिरांसि च ।
तरुणानां पूरयतं वाक्योवाक्यानि सर्व्वथा ॥
उदीरयन्ति शुकवत् पश्यन्तो तत्र नन्दतम् ॥ २८ ॥
शिक्षायां पालने चात्र पितुर्मातुश्च सन्ततम् ।
अस्त्येव सहयोगित्वमेकैकस्यास्ति यत् पुनः ॥
भागित्वं पूर्णतां प्रापयितुं चेदुभयोर्न हि ।
प्रभावाणान्तु योगः स्यादसमग्रं हि शिक्षणम् ॥ २९ ॥
शिक्षा पूर्णा तदा धर्म्माः पितुर्मातुश्च शोभनाः ।
गुणाः सर्व्वे यदा ह्येकीभवन्ति सन्तताविह ॥ ३० ॥
असत्संसर्गतोऽनीतिप्रभावात् ताश्च रक्षतम् ॥ ३१ ॥
ग्रन्थांश्च हि मनोनीतान् सङ्गिनो यच्छतं पुनः ।

२८ । न मतैरिति । तरुणानां शिरांसि धर्म्मशास्त्रोक्तैः कठोरैः मतैः तु न पूरयतम्, सर्व्वथा वाक्योवाक्यानि प्रश्नोत्तराणि तद्घटितग्रन्थविशेषान् शुकवत् उदीरयन्ति तत्पश्यन्तौ न नन्दतम् आनन्दितौ भवतम् ।

२९ । मातापित्रोरुभयोः शिक्षाविधौ कर्त्तव्यतास्ति तदाह शिक्षायामिति । शिक्षायां पालने च अत्र पितुः मातुः च सन्ततं नियतं सहयोगित्वम् अस्ति एव, [illegible] यस्मात्पूर्णताम् प्रापयितुं शिक्षामिति शेषः तयोः एकैकस्य भागित्वम् अस्ति, [illegible] यदि उभयोः प्रभावाणां योगः न स्यात्, शिक्षणं हि शिशूनामिति शेषः असमग्रम् अपूर्णं स्यात् ।

३० । शिक्षेति । तदा शिक्षा पूर्णा यदा पितुः सर्व्वे धर्म्माः मातुश्च शोभनाः गुणाः इह सन्ततौ हि एकीभवन्ति ।

३१ । असदिति । ताः सन्ततीः पुत्रान् कन्याश्च असत्संसर्गतः अनीतिप्रभावात् च रक्षतम् ।

३२ । ग्रन्थानिति । इह बालिकाभ्यः बालेभ्यः च मनोनीतान् ग्रन्थान्,

बालिकाभ्यश्च बालेभ्यः सतश्चित्रपटानिह ॥
सच्चित्रनीतिदृष्टान्तान् प्रदर्शयतमत्र यत् ।
ग्रहणप्रवणान्येषां सुकुमाराणि तानि च ॥
हृदयानि प्रगृह्णन्ति बाल्ये सम्मुद्रणानि च ॥ ३२ ॥
काव्यप्रकृतिसौन्दर्य्यस्वादानुभवमेषु च ।
प्रोन्मेषय प्रसूनानुरागञ्च परिभावय ॥ ३३ ॥
उद्यानं गृहसंयुक्तं चास्ति चेत् ते चरन्त्विह ।
पश्यन्तो वृक्षवल्लयादीन् सहाया रोपणादिषु ॥ ३४ ॥
पक्षिणः पशवः सन्ति चेत्तत्र गृहपालिताः ।
स्नेहेन तान् पालयितुं लालयितुञ्च शिक्षय ॥ ३५ ॥
परमेशगृहे नित्यं दयया ते पशून् प्रति ।
भविष्यन्ति प्रसिद्धा हि क्षुद्रकीटानपि प्रति । ३६ ॥

सङ्गिनः च पुनः यच्छतम्, सतः साधून् चित्रपटान् च, सच्चित्रनीतिदृष्टान्तान् तादृशग्रन्थान् प्रदर्शयतम्, यत् अत्र एषां सुकुमाराणि तानि ग्रहणप्रवणानि हृदयानि च बाल्ये सम्मुद्रणानि च प्रगृह्णन्ति ।

३३ । काव्येति । एषु च काव्यप्रकृतिसौन्दर्य्यस्वादानुभवं काव्यप्रकृत्योर्यत् सौन्दर्य्यं तत्स्वादानुभवं प्रोन्मेषय, प्रसूनानुरागञ्च पुष्पेषु अनुरागं परिभावय उद्दीपितं कारय । अत्र क्रिया यथायथम् पितरि मातरि च सम्बध्यते ।

३४ । उद्यानमिति । चेत् यदि गृहसंयुक्तम् उद्यानम् अस्ति, ते इह वृक्षवल्लयादीन् पश्यन्तः रोपणादिषु सहायाः सन्तः चरन्तु, विचरणं कुर्व्वन्तु ।

३५ । पक्षिण इति । चेत् यदि तत्र गृहपालिताः पक्षिणः पशवः सन्ति, तान् पशुपक्षिणः स्नेहेन लालयितुं पालयितुं च शिक्षय ।

३६ । परमेशेति । परमेशगृहे ते कन्यापुत्राः पशून् प्रति, क्षुद्रकीटान् अपि प्रति, नित्यं दयया प्रसिद्धाः भविष्यन्ति ।

शिशून् मानय तैस्तुल्यैर्दिव्यधाम यतः स्मृतम् ।
अभिलाषश्च यत्नश्च तथा भवतु वां सदा ॥
शिक्षयितुं यथा तेषां निर्दोषभाव एष हि ।
साधुत्वेऽत्र परिणतः स्वर्गोऽमुत्र च निश्चितः ॥ ३७ ॥
शिशूनां शिक्षणे चात्र पितरौ पश्यतां सदा ।
पितरं परमं नेतृत्वेनादर्शस्वरूपतः ॥ ३८ ॥

इति सम्बन्धः ।



३७। शिशूनिति। शिशून् मानय। कथम्? तैः तुल्यैः सदृशैः यतः दिव्यधाम स्मृतम्। स्वर्गे हि देवाः शिशुप्रकृतयः पृथिव्यामपि तथा। वां युवयोः अभिलाषश्च यत्नश्च सदा तथा शिक्षयितुं भवतु यथा तेषाम् एष निर्दोषभावः हि अत्र साधुत्वे परिणतः स्यात्, अमुत्र परलोके च स्वर्गः निश्चितः।

३८। शिक्षाविधौ परमादर्शमाह शिशूनामिति। अत्र शिशूनां शिक्षणे पितरौ परमं पितरं नेतृत्वेन आदर्शस्वरूपतः सदा पश्यताम्।



# भ्राता भगिनी च ।

भ्रातरो वहत प्रीतिं नित्यं वो भगिनीं प्रति ।
भ्रातॄन् प्रति भगिन्योऽत्र प्रीतिं वहत सर्व्वदा ॥ १ ॥
यतोऽजायध्वमेकस्मात् पितुर्मातुश्च स प्रभुः ।
दिशति प्रेमयोगेण मधुरेण निबन्धनम् ।
तत्कारणवशादेव न त्वन्यकारणात् पुनः ॥ २ ॥
परस्परस्य निन्देत दोषान् मतस्वभावतः ।
भिन्ना भवेत किन्त्वेकमातृपितृसमुद्भवान् ।
प्रगाढ़ेनानुरागेण प्रीणीध्वं सम्भवे तथा ॥ ३ ॥
प्राप्यैकपरिवारत्वं शान्तौ पित्रोर्गृहे सदा ।
परस्परं सेवमाना निःस्वार्थशुद्धरागतः ।
वसताप्रियदुर्दृश्यकलिर्भिन्त्तां न चैकताम् ॥ ४ ॥

१ । भ्राताभगिनीसम्पर्कजनितकर्त्तव्यानि वक्तुमुपक्रमते भ्रातर इति । हे भ्रातरः, नित्यं वो युष्माकं भगिनीं प्रति प्रीतिं वहत, हे भगिन्यः, भ्रातॄन् प्रति सर्व्वदा नित्यं प्रीतिं वहत । अन्योन्यप्रीत्या कर्त्तव्यानि परिपालयत ।

२ । तत्र कारणमाह यत इति । यतः एकस्मात् पितुः मातुः च अजायध्वम्, तत्कारणवशादेव न तु अन्यकारणात्, स प्रभुः मधुरेण प्रेमयोगेण निबन्धनं दिशति आदिशति ।

३ । दोषदर्शनेऽपि प्रीतेरपरिहार्य्यत्वमाह परस्परस्येति । परस्परस्य दोषान् निन्देत निन्दाविषयान् कुर्व्वीत, मतस्वभावतः भिन्नाः भवेत, तथा सम्भवे, तादृशनिन्दा-भिन्नतयोः सम्भावनायाम् किन्तु एकमातापितृसम्भवान् प्रगाढ़ेन अनुरागेण प्रीणीध्वम्, नित्यं प्रीत्यास्पदं कुरुध्वम् ।

४ । कलहपरिशून्यैरेकत्र वासमाह भूत्वेति । सदा अत्र पित्रोः मातापित्रोः गृहे एकपरिवारत्वं प्राप्य निःस्वार्थशुद्धरागतः परस्परं सेवमानाः शान्तौ वसत, अप्रियदुर्दृश्य-कलिः तादृशकलहः न च एकतां भिन्त्ताम् । निरन्तरं कलहशून्या एकत्र निवसत ।

मा कार्ष्ट कलहं जातु मासूयध्वं कदाचन ।
मा भूत निर्दया ज्येष्ठान् मावमंध्वं यदृच्छया ।
मानादृतांश्च क्रुध्वं वा हीनदृष्ट्या कनीयसः ॥ ५ ॥
विवाहिता वयोवृद्धा पत्नीभिर्वा विवोढृभिः ।
गन्तुमन्यत्र वा वस्तुं स्वाधीनाः किन्तु जातुचित् ॥
विच्छेदो हृदयानां वानैक्यं तत्र वियोगतः ।
शरीरघटितान्माभूद्युष्माकं हि परस्परम् ॥ ६ ॥
यत्र यूयं हि वसत हृदयानि भवन्तु वः ।
एकतायाञ्च शान्तौ च बद्धानि च चिरन्तने ॥
सखित्वे बन्धनं जातु न भञ्ज्यात् किञ्चिदप्यसौ ।
अस्थापयत् स्वयं यद्धि भगवान् परमेश्वरः ॥ ७ ॥
उद्वाहो भ्रातृकलहनिदानं भ्रातरो भुवि ।

५। मा कार्ष्टेति। जातु कदाचित् मा कलहं कार्ष्ट, कदाचन मा असूयध्वम्, मा निर्दयाः भूत, यदृच्छया मा ज्येष्ठान् अवमंध्वम्, हीनदृष्ट्या वा मा कनीयसः अनादृतान् च क्रुध्वम्।

६। विवाहानन्तरं स्वतन्त्रवासेऽपि हृदयतो न वियोगः स्यादित्याह विवाहिता इति। वयोवृद्धा विवाहिताः पत्नीभिः विवोढृभिः वा अन्यत्र गन्तुं वस्तुं वा स्वाधीनाः यथेमिति शेषः किन्तु जातुचित् तत्र शरीरघटितात् वियोगात् विच्छेदात् युष्माकं परस्परं हृदयानां विच्छेदः अनैक्यं वा मा भूत्।

७। सर्वावस्थायामविच्छेदं मिलितवासं यत्रेति। यूयं यत्र हि वसत, वो युष्माकं हृदयानि चिरन्तने सखित्वे बद्धानि एकतायां च शान्तौ च भवन्तु, यत् बन्धनं असौ स्वयं हि भगवान् अस्थापयत, किञ्चिदपि तत् बन्धनं जातु कदाचित् न भञ्ज्यात्।

८। विवाहस्य दोषमाह उद्वाह इति। भुवि संसारे उद्वाहः विवाहः भ्रातृकलह-

बहवोऽप्यत्र सद्भावसम्पन्ना व्यवदंश्चिरम् ॥
विच्छेदमभजन् घोरशत्रवो ह्यभवन्नहो ।
विसंवादपराणान्तु पत्नीनां कारणात् किल ॥ ८ ॥
अतो ह्यवहिता यत्र भ्रातरं सन्त्यजेत् प्रियम् ।
प्रियां वा भगिनीं कोऽपि पत्नीसन्तोषहेतवे ॥ ९ ॥
न कापि नारी भवतु भ्रातरं भगिनीं प्रति ।
शत्रुभावेन बद्धा वा पतिं तोषयितुं पुनः ॥ १० ॥
भ्रातृत्वभ्रातृप्रेमार्थं प्रत्यहं कुरुतान्वहम् ।
अन्योन्याचरणं तादृक् भवत्वत्र च यादृशा ।
सख्यस्यादर्शदृष्टान्तो सुखस्यातिप्रियस्य च ॥ ११ ॥
भ्रातृत्वं भगिनीत्वञ्च क्षुद्रमेवं हि यत् पुनः ।
विश्वव्यापि च पश्चात्तत् स्वर्गराज्यगतं भवेत् ।

निदानम्, सद्भावसम्पन्ना अपि बहवो भ्रातरः विसंवादपराणां पत्नीनां तु कारणात् किल व्यवदन्, विच्छेदम् अभजन्, अहो घोरशत्रवः अभवन् ।

९ । तद्दोषपरिहारायाह अत इति । अतः हि अवहिताः भवेत, यत् युष्मासु कोऽपि प्रियं भ्रातरं प्रियां वा भगिनीं पत्नीसन्तोषहेतवे न सन्त्यजेत् ।

१० । भगिनीनामपि तथा मा भूदित्याह न कापीति । न कापि नारी पतिं तोषयितुं पुनः भ्रातरं भगिनीं प्रति शत्रुभावेन बद्धा वा भवतु ।

११ । भ्रातृत्वेति । अन्वहं प्रतिदिनं भ्रातृत्वस्य भ्रातृप्रेम्णश्च अर्थं प्रत्यहं कुरुत, अत्र अन्योन्याचरणं तादृक् भवतु, यादृशा अतिप्रियस्य सुखस्य सुखयुक्तस्य सख्यस्य आदर्श-दृष्टान्तो यूयं भवतेति शेषः ।

सर्व्वेषामविशेषेण पितेति परमेश्वरम्।
स्वीकृत्य तञ्च संसेव्य यथा प्रेमवतामिह।
भ्रातृत्वं सह एषोऽयमाशिषा नित्यमन्वितः॥ १२॥

इति भ्राता भगिनी च।

---

## पतिः पत्नी च।

देवप्रतिष्ठितं श्रेयमनुष्ठानं चिरन्तनम्।
विवाहकर्म्म तत् तस्मात् तथा सम्मानयेत्सदा॥ १३॥
लोकप्रतिष्ठितत्वेन भौमसख्येन ते पुनः।
विमानयन्ति मन्यन्ते ये तद्राजनिबन्धनम्॥ १४॥

१२। फलमाह भ्रातृत्वमिति। परमेश्वरं सर्व्वेषाम् अविशेषेण पितेति स्वीकृत्य तं च संसेव्य नित्यम् आशिषा अन्वितः प्रेमवतां भ्रातृणां सहः यथा तथा यत् पुनः एवं हि क्षुद्रं भ्रातृत्वं भगिनीत्वं च पश्चात् स्वर्गराज्यगतं विश्वव्यापि तत् भ्रातृत्वं भगिनीत्वञ्च भवेत्। निर्व्विवादत्वेन चिरसख्येन भ्रातृणां भगिनीनां वासो हि [illegible]व्या स्वर्गराज्य-स्थापनायेति तत्त्वम्।

---

१३। दम्पत्योः सम्बन्धं वक्तुमाह देवप्रतिष्ठितमिति। विवाहकर्म्म चिरन्तनं शाश्वतं देवप्रतिष्ठितं स्वयं भगवता विहितम् अनुष्ठानं श्रेयम्। तस्मात् तत् विवाहकर्म्म सदा नियतं तथा देवप्रतिष्ठितमिति भावेन सम्मानयेत्।

१४। तद्विमाननमाह लोकेति। ये जनाः तत् विवाहकर्म्म राजनिबन्धनं मन्यन्ते ते लोकप्रतिष्ठितत्वेन भौमसख्येन पार्थिवसख्यत्वेन तत् विमानयन्ति।

वाणिज्येन तु पत्नी किं पतिं क्रीणाति सा किमु ।
पण्यवत्पण्यवीथीषु क्रयविक्रयभाजनम् ॥ १५ ॥
किमयं राजपुरुषो विवाहदैवतं परम् ।
तन्मुद्रया दार्ढ्यमेति दारकर्मनिबन्धनम् ॥ १६ ॥
आत्मोपगच्छते तत्रामरेणामरमात्मना ।
बध्नाति ग्रन्थिनात्मानं नित्येनैव स्वयं प्रभुः ॥ १७ ॥
स्मरैतन्न स चोद्वाहश्चेन्न निर्व्वाहयेत् स तु ॥ १८ ॥
अतः परिणये राजव्यवस्थायाः प्रहायताम् ।
राजाज्ञानाच्च मा काङ्क्षीः पण्यद्रव्यमिवैव तु ॥
अन्योन्यं क्रेतुमनर्घ्यैः राजकीयनिबन्धनैः ।
स्वर्गस्थलेख्यसत्यत्वसम्पादयितुरप्यतः ।
तन्मुद्रया निबद्धे च विप्रोद्वाहनिबन्धने ॥ १९ ॥

१५। तदेव विवृणोति वाणिज्येनेति। पत्नी किं पतिं वाणिज्येन क्रीणाति? सा पत्नी किं पण्यवीथीषु क्रयविक्रयभाजनम्?

१६। किमिति। अयं राजपुरुषः राजनियमेन विवाहकर्म्म सम्पादयितुं नियुक्त इति शेषः परं श्रेष्ठं विवाहदैवतम् किम्? किं तन्मुद्रया निबन्धनपत्रपरिच्छिन्निकया तस्य राजपुरुषस्य मुद्रया दारकर्मनिबन्धनं दार्ढ्यम् एति प्राप्नोति?

१७। किमिदं विवाहकर्म्म परमार्थमित्याह आत्मेति। आत्मा उपगच्छति मिलति। तत्र विवाहकर्म्मणि स्वयं प्रभुः ईश्वरः नित्येनैव ग्रन्थिना अमरेण आत्मना अमरम् आत्मानं बध्नाति।

१८। तस्यैव विवाहस्य विवाहत्वमित्याह स्मरेति। एतत् स्मर, न तु उद्वाहः, चेत् यदि स प्रभुः न तु निर्व्वाहयेत् तमिति शेषः।

१९। कुतस्तन्निबन्धनस्य निबन्धनत्वं तदेवाह अत इति। अतः परिणये विवाह-

युष्मासु कोऽस्ति वा योऽसावुद्वोढुर्दायितामिह ।
भीमां शक्तो ग्रहीतुन्तस्याशिषोऽनुग्रहं विना ॥ २० ॥
विवाहदेवचरणाश्रीजं भक्त्या नमस्कुरु ।
गम्भीरेण च भावेन परीक्षाभिः प्रलोभनैः ॥
पूर्णेऽस्मिन् विश्व संसार आशिषं तस्य मूर्द्धि ते ।
हृदये तस्य चालोकं बलञ्च खलु धारयन् ॥ २१ ॥
यावज्जीवसि चोद्वाहसम्बन्धमात्मनोरिह ।
प्रापय्य पूर्णतां वर्षं वर्षं कर्त्तुं चिरन्तनम् ।
स्वर्गीयं खलु योगञ्च यतस्व प्रार्थयानिशम् ॥ २२ ॥

कर्त्तव्ये अन्यैः राजकीयनियमनैः पशुद्रव्यमिव अनीत्यं कृतं राजव्यवस्थायाः राजाज्ञानां च उद्वाहता मा कार्षीः । किं कर्त्तव्यं तदाह स्वर्गस्थनित्यसत्यत्वसम्पादयितुः—प्रेयपत्नी समासः—परमेश्वरस्य अयतः सम्मुदृशा नियतं उद्वाहबन्धने विश्व ।

२० । गुरुत्वमाह युष्माश्विति । युष्मासु को वा अस्ति योऽसौ उद्वोढुः भीमां सम्पादनाक्षमतया भयावहां दायितां दायित्वम् तस्य परमेश्वरस्य आशिष अनुग्रहं विना ग्रहीतुं शक्तः ?

२१ । आशीर्ग्रहणमाह विवाहेति । भक्त्या विवाहदेवचरणाश्रीजं नमस्कुरु । परीक्षाभिः प्रलोभनैः पूर्णे अस्मिन् संसारे ते तव मूर्द्धि तस्य देवस्य आशिषं हृदये च तस्य देवस्य आलोकं बलं च धारयन् गम्भीरेण भावेन विश्व ।

२२ । उद्वाहबन्धनस्य नित्यत्वं कर्मोन्नतिशीलत्वञ्चाह यावदिति । यावत् जीवसि इह आत्मनोः आत्मद्वयस्य उद्वाहबन्धनं वर्षं वर्षं प्रतिवर्षं पूर्णतां प्रापय्य चिरन्तनं शाश्वतं स्वर्गीयं योगञ्च खलु कर्त्तुं यतस्व, अनिशं प्रार्थय ।

नोद्वाहश्चरमापत्तिर्भाविनी सा क्रमोन्नतेः।
अवस्था वर्द्धमानायाः शुद्धेरक्तेश्च नित्यशः॥ २३॥
सत्यतः पूर्णतो वाथ परिणीतो नरो न वा।
नार्य्युपयाम एषोऽयं सोपानमान्तरस्य च॥
प्रथमं हि सखित्वस्य भाविनः प्रतिमा पुनः।
उच्चतरात्मयोगस्य वर्द्धतः क्रमशः खलु॥ २४॥
अतः पतिश्च पत्नी च विवाहबन्धनेन च।
आध्यात्मिकेन योगेन सम्बद्धावधिकाधिकम्॥ २५॥
अर्द्धा पत्नी च विज्ञेया पतिरर्द्धः स्मृतः पुनः।
एकत्वमविभक्तत्वं स्यात्तयोः परमेश्वरे॥ २६॥

२३। नोद्वाह इति। उद्वाहः विवाहानुष्ठानं न चरमापत्तिः, किन्तर्हि? नित्यशः वर्द्धमानायाः वर्द्धनशीलायाः शुद्धेः रक्तेः अनुरागस्य च सा भाविनी क्रमोन्नतेः अवस्था।

२४। न हि विवाहानुष्ठानमात्रेण तत्समापत्तिरित्याह सत्यत इति। अथ सत्यतः पूर्णतो वा नरः न परिणीतः नारी वा न परिणीता इति शेषः। एषः अयम् उपयामः विवाहकर्म्म आन्तरस्य भाविनः सखित्वस्य प्रथमं सोपानम्; क्रमशः वर्द्धतः वर्द्धिष्णमाणस्य उच्चतरात्मयोगस्य च पुनः खलु प्रतिमा तन्निदर्शनमात्रम्।

२५। ततः किं कर्त्तव्यं तदाह अत इति। अतः अतएव पतिश्च पत्नी च विवाह-बन्धनेन क्रमिकोन्नतिशीलेन आध्यात्मिकेन योगेन च अधिकाधिकं सम्बद्धौ भवताम् इति शेषः। जीवनव्यापिसाधनेन विवाहविधिः पूर्णतां सम्पादयतामिति कर्त्तव्यम्।

२६। तयोर्भावि अविभक्तत्वं प्रदर्शयति अर्द्धेति। पतिः अर्द्धः स्मृतः पत्नी च अर्द्धा विज्ञेया। तयोः दम्पत्योः परमेश्वरे पुनः अविभक्तत्वम् एकत्वम् स्यात्।

लक्ष्यं परिणयस्येदं पत्न्यश्च पतयो ह्यतः ।
विश्वसित च प्रीणीत मानयत परस्परम् ॥
आध्यात्मिकेषु चेष्टेध्वं संसारविषयेषु च ।
एकीभावाय नितरां कर्त्तुं कर्म्मैकभावतः ॥ २७ ॥
अभिमानवशात्तस्मात् प्राधान्यस्य तु जातुचित् ।
नोत्थापयेत् स्वजातेस्तु पत्नी पतिरथापि वा ॥
परस्परं मानयन्तु समाना इव नित्यशः ।
ईश्वरस्य गृहे तेऽत्र यथा च सहयोगिनः ॥ २८ ॥
दासीवद्व्यवहरति पत्न्या विश्वसितीह न ।
सतीत्वेऽन्तःपुरे ताञ्च न रक्षन् चारवासिवत् ॥
क्रीतप्रेष्येव तां नित्यं प्रणतां रक्षितुं पुनः ।
यतते यो न चोन्नेतुं दत्तेऽस्याः सदृशो न सः ॥ २९ ॥

२७। एकत्वदृष्ट्या किं कर्त्तव्यं तदाह लक्ष्यमिति। परिणयस्य इदम् एकत्वम् अविभक्तत्वं लक्ष्यम्। अतः हे पत्न्यश्च पतयः, परस्परं विश्वसित, प्रीणीत, मानयत, एकीभावाय आध्यात्मिकेषु सांसारिकविषयेषु च एकभावतः कर्म्म कर्त्तुं नितरां चेष्टध्वम्।

२८। उभयोरेकत्वमेव परमार्थमतस्तयोरेकतरस्य प्राधान्यमित्यभिमानः परिहार्य-इत्याह अभिमानेति। पत्नी अथापि वा पतिः अभिमानवशात् जातुचित् कदाचित् स्वजातेः प्राधान्यस्य प्रश्नम् न उत्थापयेत्, परस्परं नित्यशः मानयन्तु। केन भावेन? ते अत्र ईश्वरस्य गृहे समानाः इव यथा च सहयोगिनः।

२९। पत्युरसदृशव्यवहारं धिक्करोति दासीति। यः पतिः पत्न्या दासीवत् व्यवहरति, इह अन्तःपुरे चारवासिवत् कारागृहवासिवत् तां पत्नीं च न रक्षन् सतीत्वे न विश्वसिति, क्रीतप्रेष्येव क्रीतदासीव तां पुनः नित्यं प्रणतां रक्षितुं यतते, न च उन्नेतुम् आत्मानमिति शेषः दत्ते, न सः पतिः अस्याः पत्न्याः सदृशः।

अनुरूपा न सा तद्वद् या कर्त्तुं दासवत्पतिम्।
तस्योपरि च साम्राज्यं भोजयन्ती च शृङ्खलैः॥
इन्द्रियाधीनता-सांसारिकता-घटितैर्दृढम्।
आवद्धं रचितुं नित्यं यदि यत्नपरा पुनः॥ ३०॥
न चातिचरणं ह्यस्तु पश्चादेकतरादिह।
तयोः सम्मिलनेनैव सेवा तु स्वप्रभोर्गृहे॥ ३१॥
समानत्वेऽपि नो नारी नरो वा चरितं पुनः।
अन्यदीयं स्वकं कुर्य्यात् कर्म्म वाधिकरोत्विह॥ ३२॥
चरितं जीवनस्याव लक्ष्यं भिन्नं प्रभुः स्वयम्।
निर्द्दिष्टवान् तयोस्तस्माव निर्यातु कदाचन॥ ३३॥

३०। पत्न्या असहृशीत्वं धिक्कारमुखेन दर्शयति अनुरूपेति। तद्वत् सा पत्नी न अनुरूपा या पतिं दासवत् कर्त्तुं, तस्य पत्युः उपरि च साम्राज्यं कर्त्तुं भोजयन्ती इन्द्रियाधीनता-सांसारिकताघटितैः शृङ्खलैः दृढम् आवद्धं रचितुं पुनः यदि नित्यं यत्नपरा।

३१। तयोः कर्त्तव्यमभिदधाति न चेति। एकतरात् पश्चात् इह अतिचरणं हि न च अस्तु, तु किन्तु तयोः सम्मिलनेन एव स्वप्रभोः परमेशस्य गृहे सेवा अस्तु।

३२। तयोः समानत्वेऽपि भेदं दर्शयति समानत्व इति। तयोः समानत्वेऽपि नारी नरः वा पुनः अन्यदीयं चरितं नो स्वकं कुर्य्यात् अन्यदीयं कर्म्म वा इह नो अधिकरोतु। स्वे स्वेऽधिकारे स्थातव्यमिति तत्त्वम्।

३३। समानत्वेऽपि कथं भेद इत्यपेक्षायाह चरितमिति। अत्र स्वयं प्रभुः तयोः चरितं जीवनस्य लक्ष्यं भिन्नं निर्द्दिष्टवान्, तस्मात् भेदात् कदाचन नरः नारी वा न निर्यातु निर्गच्छतु, स्वस्मिन् लक्ष्ये च नित्यं तिष्ठतु।

नर: क्रीड़तु नारीत्वमाश्रित्य गृहिणीव न ।
नरकर्म्म च नारी नान्विष्यतु नरतां गता ॥ ३४ ॥
प्रभोर्नियोजितं कर्म्मैकैकस्य कुरुतां सदा ।
रचतां मैत्रसम्बन्धमंशभाजाविव प्रियम् ॥
विवदेतां न जातुच यथैव प्रतियोगिनौ ॥ ३५ ॥
शोच्या सा प्रकृतिं स्वाञ्च खण्डते चावमन्यते ।
ईश्वरं कर्म्म संत्यज्य न्याय्यं पौरुषमाश्रिता ॥
नरकर्म्मसु तेषाञ्च क्रीड़ाकर्म्मसु संरता ।
विड़म्बयति चेष्टाश्च तेषाञ्चापेचते पुन: ।
नाशं लज्जाञ्च पातित्यं भाग्यं तस्या विनिश्चितम् ॥ ३६ ॥
गृहं नाशयते गर्व्वो यदीर्षा सुखमस्य च ।
हरते तां जहिह्यत्र मिथ्यावत्पापवत्तत: ॥ ३७ ॥

३४ । तयो: कर्म्मविनिमयं निन्दति नर इति । नारीत्वम् आश्रित्य गृहिणीव नर: न क्रीड़तु, नरतां गता नरत्वं प्राप्ता नारी च न नरकर्म्म च अन्विष्यतु ।

३५ । कर्म्मविभागमाह प्रभोरिति । प्रभो: ईश्वरस्य एकैकस्य नियोजितं कर्म्म सदा कुरुताम्, अंशभाजौ इव प्रियं मैत्रसम्बन्धं रचतां, न जातु कदा [illegible] यथा एव प्रतियोगिनौ न तथा विवदेताम् ।

३६ । नार्य्या नरकर्म्मानुकरणं निन्दति शोच्येति । सा नारी शोच्या, या स्वां प्रकृतिं च खण्डते, ईश्वरं च अवमन्यते, न्याय्यं कर्म्म संत्यज्य पौरुषम् आश्रिता नरकर्म्मसु तेषां नराणां क्रीड़ाकर्म्मसु च संरता तेषां चेष्टा: च विड़म्बयति अनुकरोति । किमस्य चेष्टितस्य फलम् ? विनिश्चितं तस्या: भाग्यं पुन: नाशं लज्जां पातित्यं च अपेचते ।

३७ । ईर्षित्वं परित्याज्यमित्याह गृहमिति । यदि गर्व्व: गृहं नाशयते, ईर्षा च अस्य गृहस्य सुखं हरते, तत: ताम् ईर्षां मिथ्यावत् पापवत् अत्र जहिहि ।

अविश्वस्तत्वतो रक्षेदात्मानं दृढदेनसः ।
पतिः पत्नी च चिन्तायामपि नाभिचरेत्क्वचित् ॥
जुगुप्सिततमञ्चैतद्गण्यं घृण्यतमं सदा ॥ ३८ ॥
सत्त्वं सतीत्वं निर्व्विघ्नं यत्र नास्ति विपत्पुनः ।
प्रलोभनमुखे नाभ्यामुखं सत्यं न जातुचित् ॥
विश्वस्तता तयोर्नित्यं प्रलोभनपरीक्षयोः ।
परीक्षिता निकषेऽस्तु स्यातां तौ दम्पती तथा ॥
परस्परानुरक्तौ यदिह चिन्ताऽसती पुनः ।
न सम्भवेदवस्थासु सर्व्वासु च कदाचन ॥ ३९ ॥
सत्त्वे सतीत्वे प्रेमाणं योजयादस्वभाववत् ।
भावोऽयं तद्धि मुकुलं प्रफुल्लकुसुमन्त्वसौ ॥ ४० ॥

३८। व्यभिचरणेन विश्वासविहननं महत्पापं, ततो निवारयति अविश्वस्तत्वत इति। दृढदेनसः अनल्पपापात् अविश्वस्तत्वतः विश्वासविहननात् पतिः पत्नी च आत्मानं रक्षेत्; चिन्तायामपि न क्वचित् व्यभिचरेत्। एतत् व्यभिचारजनिताविश्वस्तत्वं सदा जुगुप्सितं घृण्यतमं गण्यम्।

३९। पत्युः सत्त्वं पत्न्याः सतीत्वं परीक्षासहञ्चेत् तदा सत्यमन्यथा न तथेत्याह सत्त्वमिति। यत्र विपत् न अस्ति तत्र निर्व्विघ्नं, प्रलोभनमुखे पुनः नाभ्यामुखं सत्त्वं सतीत्वं जातुचित् कदाचित् न सत्यम्। नित्यं तयोः विश्वस्तता प्रलोभनपरीक्षयोः निकषे परीक्षिता अस्तु। तौ दम्पती तथा परस्परानुरक्तौ स्यातां यत् इह असती चिन्ता पुनः सर्व्वासु अवस्थासु च कदाचन न सम्भवेत्।

४०। न हि सद्भावेनैव कृतार्थता प्रेम्णैव सेत्याह सत्त्व इति। सत्त्वे सतीत्वे प्रेमाणं योजय। अदः सत्त्वं सतीत्वञ्च स्वभाववत् अव्यभिचरणरूपोऽभावपक्षः। अयं

प्रगाढ़ेनानुरागेण पतिः पत्नी च सन्ततम् ।
परस्परं हि बध्नीयाद्न्योऽन्यस्मिन् वसेत्सदा ॥ ४१ ॥
सांसारिकान् हि विषयान् नियम्य मिलितौ यथा ।
कुर्व्वीयातां तथा प्रार्थयेताञ्च शाश्वतं पुनः ।
आत्मनोर्हितमुद्दिश्य जपेतां समये च तौ ॥ ४२ ॥
स्वर्गीयं खलु हर्म्यं तदुपविश्य रहश्च तौ ।
गायेतां प्रार्थयेताञ्च योगञ्च परमात्मना ॥
युञ्जीयातां हृदयेनानन्दसंप्लावितेन च ॥ ४३ ॥
एवमन्ते यमौ स्यातां स्वर्गीयायाञ्च निर्वृतौ ।
उत्थातुं प्रविशेताञ्च पूर्णानन्दालये समम् ॥ ४४ ॥

प्रेमा भावः भावपक्षः । तत्रास्वं सतीत्वञ्च मुकुलं, असौ प्रेमा तु प्रफुल्लकुसुमम् । अनेन सत्त्वसतीत्वतः प्रेमोत्पत्तिरिति तत्त्वनिष्कर्षः ।

४१ । गाढ़ानुरागस्यावश्यकर्त्तव्यतामाह प्रगाढ़ेनेति । पतिः पत्नी च सततं प्रगाढ़ेन अनुरागेण परस्परं हि बध्नीयात्, सदा अन्योन्यस्मिन् वसेत् । प्रेम्णा एकस्यापरस्मां वास इत्यभिप्रायम् ।

४२ । संसारं धर्म्मञ्च मिलितभावेनानुतिष्ठेतामित्याह सांसारिकानिति । सांसारिकान् हि विषयान् नियम्य यथा तौ मिलितौ कुर्व्वीयातां कर्म्मानुमिलितौ, तथा प्रार्थयेतां, शाश्वतम् आत्मनोः हितम् उद्दिश्य च समये काले जपेताम् ।

४३ । मिलितप्रार्थनादिनैव कृतार्थत्वमित्याह स्वर्गीयमिति । खलु तत् हर्म्यं स्वर्गीयं, यत् तौ रहः उपविश्य गायेतां प्रार्थयेतां च, आनन्दसंप्लावितेन हृदयेन च परमात्मना योगञ्च युञ्जीयाताम् ।

४४ । किमनेन फलमित्याह, एवमिति । एवम् अन्ते चरमावस्थायां स्वर्गीयायां च निर्वृतौ उत्थातुं यमौ स्याताम्, समम् एकत्र पूर्णानन्दालये प्रविशेतां च ।

## दासः ।

धन्यः स निलयो यस्मिन् खेदहष्ट्या विलोकिताः ।
भृत्यास्तेषामभावाच्चेष्यन्तेऽतियत्नपूर्व्वकम् ॥ १ ॥
गर्व्वो जनं तथा स्फीतं करोति यद्विलोकते ।
हीनदृष्ट्या भृत्यवर्गान् नीचत्वं हितमार्गणम् ॥ २ ॥
सेवते किं प्रभुर्द्दासः केवलः सेवकः स्मृतः ।
युक्तिमेवं दर्शयति गर्व्वितं हृदयमसत् ॥ ३ ॥
सेवते स प्रभुर्वाढ़ं न न्यूनो दासतः क्वचित् ।
यः कश्चित्सेवते नात्र प्रभुर्भवितुमक्षमः ॥ ४ ॥
पृथ्व्याश्च दिव्यधाम्नश्च सेवते प्रभुरप्यसौ ।
आगच्छति धराधाम दासान् क्षुद्रांश्च सेवितुम् ॥ ५ ॥

१। अधुना दासान् प्रति कर्त्तव्यानि वक्तुमाह धन्य इति। स निलयः गृहं धन्यः, यस्मिन् भृत्याः खेदहष्ट्या विलोकिताः, तेषां भृत्यानाम् अभावाच्च प्रयोजनीयविषयाः अतियत्नपूर्व्वकं ईप्स्यन्ते ।

२। गर्व्वप्रयुक्तकर्त्तव्यविमुखतां निन्दति गर्व्व इति। गर्व्वः जनं तथा स्फीतं करोति यत् भृत्यवर्गान् स हीनदृष्ट्या विलोकते, हितमार्गणं हितान्वेषणं तेषामिति शेषः नीचत्वं विलोकते मन्यते ।

३। सेवत इति। प्रभुः किं सेवते सेवां करोति? दासः केवलः सेवकः स्मृतः शेषः, न तु प्रभुः सेवक इति भावः। गर्व्वितम् असत् हृदयम् एवं युक्तिं दर्शयति ।

४। "सेवते किं प्रभु"रिति प्रश्नं समुत्तरयति सेवत इति। वाढ़म्, स प्रभुः सेवते, दासतः क्वचित् न न्यूनः सेवाकार्य्यमिति शेषः। यथा दासः सेवते तथा प्रभुरिति न तयोस्तत्र न्यूनाधिक्यम्। यो न सेवते स प्रभुरेव भवितुं नार्हति ।

५। नात्र नीचता यतः स्वयमीश्वरः क्षुद्रतमान् जीवान् सेवते इत्याह पृथ्व्या इति ।

अतो गर्व्वितमर्त्त्य त्वं दूरे निःक्षिप ते स्मयम् ।
आयान्ति सेवितुं वेत्थ तत्सेवां देवतोचिताम् ॥ ६ ॥
ईश्वरोद्दीप्तभावेन गृही सन्तानवत्सदा ।
पश्येत्तान् ज्येष्ठयत्नानां भाजनानि पितुः खलु ॥ ७ ॥
येषां हि रक्षणार्थं प्रभुर्भारमदात् स्वयम् ।
तदर्थं गणनादाने बाध्यो नित्यं भवत्वसौ ॥ ८ ॥
पिता भवतु माता च गृहस्थो गृहिणी ततः ।
आनन्दोत्सव एषां स्यात् भक्त्या सेवा चिरं मुदा ॥ ९ ॥

पृथ्व्याः पृथिव्याः च दिव्यधाम्नः च असौ प्रभुः परमेश्वरः अपि सेवते । क्षुद्रान् धनैश्वर्य्यादिषु गौणान् दासान् च सेवितुं धराधाम आगच्छति । सर्व्वत्र विद्यमानस्यागमनमिति भावः महतो महीयसः स्वे महिम्नि नित्यविराजमानस्य राजत्वं परिहाय गौणता-स्वीकरणं सूचयति ।

६ । गर्व्वं परिहर्त्तुमुपदिशति अत इति । हे गर्व्वित मर्त्त्य, अतः ते तव स्मयं गर्व्वं दूरे निःक्षिप । ये सेवितुम् आयान्ति, तत्सेवां देवतोचितां वेत्थ ।

७ । गृहिणः दासान् प्रति पितृवात्सल्यमाह ईश्वरेति । गृही सदा ईश्वरोद्दीप्त-भावेन परमात्मना प्रोद्दीपितेन भावेन तान् दासान् सन्तानवत् पितुः ज्येष्ठयत्नानां भाजनानि पश्येत् । सन्तानो यथा पितुः स्नेहस्य यत्नस्य च पात्रं भवति, तथा दासोऽपि प्रभोः पितृस्थानीयत्वात् ।

८ । तत्र दायित्वमाह येषामिति । येषां दासानां रक्षणार्थं स्वयं प्रभुः परमेश्वरः भारम् अदात्, असौ जनः भवतु, तदर्थं तेषां भृत्यानां निमित्तम् गणनादाने किं कृतं न कृतं वा तस्य यथावत् गणनार्पणे नित्यं बाध्यः ।

९ । गृहि-गृहिण्योः पितृत्व-मातृत्वे आह पितेति । गृहस्थः पिता, गृहिणी च माता भवतु । ततः किं स्यात् ? एषाम् दासानाम् आनन्दोत्सवः स्यात् भक्त्या प्रभुं प्रत्यनुरक्त्या मुदा हर्षेण च सेवा स्यात् । तेऽनुरागेन आह्लादेन च तदा प्रभुं सेविष्यन्ते ।

यदा त्वं नूतनं भृत्यं नियोजयसि कर्म्मणि ।
किं करिष्यति कर्म्मासौ निबोधय यथायथम् ॥
स्वरूपं तस्य कृत्यस्य परिमाणञ्च संख्यया ।
कतिचिद्वा क्षणान् विश्रामार्थं प्राप्स्यति तत्पुनः ॥
निर्द्दिष्टसमयञ्चास्य वृत्तिप्राप्तेर्विधानतः ।
समाहे मासि वा वर्षचतुर्थभागतोऽथ तम् ॥ १० ॥
सम्भूयन्तां वेतनानि न जातु स हि धावति ।
ऋणे तेन हि भिद्येत कृतं पूर्व्वं निबन्धनम् ॥
दुःखं क्लेशस्त्वभावश्च धारश्चानवधानता ।
असहायेषु दीनेषु निःक्षिप्येत स्वयं पुनः ॥
खादत्यामोदतः खाद्यं प्राचुर्य्येण च मोदते ॥ ११ ॥
निष्ठुरत्वेन किन्त्वं भो प्राप्याद्वञ्चयसे च तम् ।

१० । भृत्यनियोगकाले कर्त्तव्यमाह यदेति । यदा त्वं नूतनं भृत्यं कर्म्मणि नियोजयसि, असौ भृत्यः किं कर्म्म करिष्यति, तस्य कृत्यस्य स्वरूपम्, कर्म्मणः परिमाणं, संख्यया कतिचित् वा क्षणान् विश्रामार्थं पुनः प्राप्स्यति तत्, विधानतः विधिपूर्व्वकं समाहे मासि अथवा वर्षचतुर्थभागे वृत्तिप्राप्तेः निर्द्दिष्टसमयञ्च तं भृत्यं यथायथम् निबोधय ।

११ । वृत्तिदाने नियमभङ्गं दूषयति सम्भूयन्तामिति । जातु कदाचित् वेतनानि न सम्भूयन्तां । तेन हि स गृही ऋणे धावति ; पूर्व्वं कृतं निबन्धनं भिद्येत ; असहायेषु दीनेषु दासेषु दुःखं, क्लेशः तु, अभावः च, धारः, अनवधानता च निःक्षिप्येत, स्वयं पुनः आमोदतः प्राचुर्य्येण खाद्यं खादति, मोदते च ।

१२ । निष्ठुरत्वेनेति । किं त्वं भो निष्ठुरत्वेन तं दासं प्राप्यात् वञ्चयसे, तं दासम्

तमोदनमदत्त्वा तमुद्दश्यात्मानमात्मनाम् ॥
सन्ततीः स्थूलपिण्डैव सम्भावयसि निलयः ॥ १२ ॥
मा भूदेवं परमेशस्त्वां ताड्यान्निष्ठुरात् सदा ।
स्वार्थान्वेषणतोऽन्यायादमनुष्यत्वतोऽवतु ॥ १३ ॥
न प्रलोभय दासांस्ते दीनांश्च दुर्बलान् क्षिपेत् ।
प्रलोभनेषु यः पापमाप्नोत्यतिमहत् स तु ॥ १४ ॥
निर्द्दिष्टं कर्म्म चेत्तस्य तस्मै दद्यास्तमस्यसि ।
साधारणातिविस्तीर्णकार्य्याब्धौ तन्तु पावकम् ॥
अश्वपालस्य दासस्य वस्त्रसेवकमेव च ।
कृत्वातिभारसंयस्तं दायित्वैर्विस्तृतैरिह ॥
प्रलोभयसि शैथिल्यपरो भवितुमक्षमः ।
अलसो दूषयस्येवमत्युद्वेगातिकर्म्मभिः ॥ १५ ॥

ओदनम् अदत्त्वा तमुद्दश्य आत्मानम् आत्मना सन्ततीव स्थूलपिण्डैः स्थूलशरीरैः निलयः सम्भावयसि ?

१३ । मा भूदिति । एव मा भूत् । परमेश्वरः सदा ताडनात् निष्ठुरात् स्वार्थान्वेषणतः, अन्यायात्, अमनुष्यत्वतः सदा त्वाम् अवतु रक्षतु ।

१४ । नेति । ते तव दासान् न प्रलोभय । यः दीनान् दुर्बलान् च प्रलोभनेषु क्षिपेत्, स तु अतिमहत्पापम् आप्नोति ।

१५ । किं किं कर्म्म करिष्यति तदनिर्द्धारणे दोषमाह निर्द्दिष्टमिति । चेत् यदि त्वं तस्मै दासाय निर्द्दिष्टं कर्म्म न दद्याः, तं दासं साधारणातिविस्तीर्णकार्य्याब्धौ अस्यसि निक्षिपसि, तं दासं तु पावकं अश्वपालं च दासं च वस्त्रसेवकं वहनशीलवस्त्रधारम् एव

निखिलानि च कर्म्माणि कर्त्तुं यं त्वमपेक्षसे ।
न सामर्थ्येन कुर्य्यात् स्याद्विरक्त्युद्वेगकारणम् ॥ १६ ॥
अलङ्कारांश्च मुद्राश्च द्रव्याणि मूल्यवन्ति च ।
इतस्ततो विकिरंस्तं प्रलोभय न चार्पय ॥
अकृत्वा गणनालेख्यं स्पष्टं चानवबोधयन् ।
भारञ्च गृहवस्तूनां साधनानाञ्च दायिताम् ॥ १७ ॥
आत्मीयानान्तु वस्तूनां गणनां यो न रक्षति ।
अविवेकी मिताचारहीनो भृत्यान् स शासने ॥
दायित्वानुभवे चापि न स भवतु विस्मितः ।
दुःखितो वाऽसकृत् तस्य द्रव्याणाञ्चेददर्शनम् ।
वञ्चकत्वमसत्त्वञ्च भृत्यानां परिवर्द्धितम् ॥ १८ ॥

च कृत्वा विस्मृतेः दायित्वे इव श्रैथिल्यपरः, अक्षमः, अलसः भवितुं प्रलोभयसि, एवम् अत्युद्वेगातिकर्म्मभिः दूषयसि ।

१६ । तादृशःचरणमेकतः कर्त्तव्यापरिपालनेऽपरतो विरक्तेः कारणं भविष्यतीत्याह निखिलानीति । यं दासं त्वं निखिलानि कर्म्माणि कर्त्तुम् अपेक्षसे न स सामर्थ्येन कुर्य्यात्, विरक्त्युद्वेगकारणं स्यात् ।

१७ । प्रलोभने निषेधं निवारयति अलङ्कारानिति । अलङ्कारान् च, मुद्राः च, मूल्यवन्ति द्रव्याणि च इतस्ततो विकिरन् तं दासं न प्रलोभय, गृहवस्तूनां साधनानां च गणनालेख्यम् अकृत्वा स्पष्टं दायितां च अनवबोधयन् भारं न अर्पय ।

१८ । अनवधानपरं प्रभुं निन्दति आत्मीयानामिति । यः आत्मीयानां स्वकीयानां वस्तूनां गणनां न रक्षति, स अविवेकी मिताचारहीनः, भृत्यान् शासने दायित्वानुभवे च अपि न रक्षति, स विस्मितः, दुःखितः वा न भवतु चेत् यदि तस्य प्रभोः असकृत् द्रव्याणाम् अदर्शनं, भृत्यानां वञ्चकत्वम् असत्त्वञ्च परिवर्द्धितं भवेदिति शेषः ।

प्रभवः कति वक्तृत्वात् क्षतवन्तोऽसतोऽखिलो ।
निःक्षिप्य जीवचित्तानि प्रलोभनमुखे स्वयम् ॥ १९ ॥
परेऽपराधिनो ह्येते द्रव्याण्यनवधानतः ।
अपहाराग्रदान्यत्र कृत्वा तस्य गृहे प्रभोः ॥
येषां ते रक्षकास्तेन निर्दिष्टा मानवेऽपि च ।
अपराद्धा विनिक्षिप्य लोभे चित्तविदूषणे ॥
अवधानविहीनांस्तान् प्रभुन् दासांश्च तान् पुनः ।
असतः परमः सत्यं प्रभुर्दण्डं विधास्यति ॥ २० ॥
वासगृहं विनिर्दिष्टं तेषां यच्च भवत्विह ।
अस्वास्थ्यजनकञ्चार्द्रस्थानं वा स्वास्थ्यवर्द्धकम् ॥
कुटीरं शयनीयञ्च सुखदं चोष्णशाटकम् ।
शीते पुष्टिकरं खाद्यं प्राप्नुवन्तु विधानतः ॥ २१ ॥

१९ । प्रभुद्रोपादमनुष्यत्वं दर्शयति प्रभव इति । कति प्रभवः अन्यौ जीवचित्तानि अन्यानामिति शेषः अन्यं प्रलोभनमुखे निःक्षिप्य वक्तृत्वात् असतः क्षतवन्तः हि ।

२० । तेऽपराधिनो दण्डभाज इत्याह पर इति । एते [illegible] अत्र प्रभोः परमेश्वरस्य गृहे येषां द्रव्याणां ते रक्षकाः निर्दिष्टाः अनवधानतः तानि द्रव्याणि अपहारा-न्यदानि कृत्वा परे परमेश्वरे अपराधिनः, चित्तविदूषणे लोभे विनिक्षिप्य जनानिति शेषः मानवे अपि च अपराद्धाः अपराधयुक्ताः । सत्यं परमः प्रभुः परमेश्वरः अवधानविहीनान् तान् प्रभुन् असतः तान् दासान् च पुनः दण्डं विधास्यति ।

२१ । दासानां स्वास्थ्याय हितमाह वासगृहमिति । तेषां यत् वासगृहं निर्दिष्टं तत् इह अस्वास्थ्यजनकम् आर्द्रस्थानं च न भवतु । स्वास्थ्यवर्द्धकं कुटीरं गृहविभागरूपं, सुखदं शयनीयं च, शीते उष्णशाटकं पुष्टिकरं खाद्यं च विधानतः प्राप्नुवन्तु ।

व्याधिग्रस्ता यदा ते स्युर्नावहेलस्व जातुचित् ।
तान् सम्भावयितुं पथ्येनागदेनोपयोगिना ॥ २२ ।
अबाध्येषु च तेष्वत्र तथानवहितेषु च ।
भर्तृ सयसि यथा यासि तथैव स्नेहभाषणैः ॥
आच्छादय पुरस्कारैस्तान् कर्त्तव्यानि ते पुनः ।
सम्पादयन्ति सन्तोषमुपाद्य च यदा तव ॥ २३ ।
उत्सवेषु च यज्ञानुष्ठानेष्वेतांश्च भोजय । २४ ।
आर्त्तवानि फलान्येभ्यस्तुषारखण्डकानि च ।
मिष्टान्नानि च वस्त्राणि तथोपानह एव वा ॥
पुरातनानि नूत्नानि ग्राह्याण्युपायनानि च ।
मुखान्येषां प्रफुल्लानि सम्भावयन्ति चाशिषा ॥ २५ ।

२२। रोगाहितेषु कर्त्तव्यमाह व्याधिग्रस्ता इति। यदा ते व्याधिग्रस्ताः स्युः जातुचित् कदाचित् तान् उपयोगिना पथ्येन अगदेन भेषजेन सम्भावयितुं न अवहेलस्व ।

२३। आसनपुरस्कारदानकर्त्तव्यतामाह अबाध्येष्विति। अत्र तेषु अबाध्येषु अनवहितेषु च यथा भर्तृ सयसि यासि तथैव यदा तव सन्तोषम् उत्पाद्य ते पुनः कर्त्तव्यानि सम्पादयन्ति स्नेहभाषणैः पुरस्कारैः तान् आच्छादय ।

२४। उत्सवेष्विति। उत्सवेषु यज्ञानुष्ठानेषु च एतान् दासान् च भोजय ।

२५। तदुपयोगिदानान्याह आर्त्तवानीति। आर्त्तवानि ऋतुजातानि फलानि, तुषारखण्डकानि च, मिष्टान्नानि, तथा वस्त्राणि, उपानहः, पुरातनानि नूत्नानि एव वा ग्राह्याणि उपायनानि स्युः, एषां दासानां मुखानि प्रफुल्लानि भवेयुः, आशिषा च सम्भावयन्ति ते त्वामिति शेषः ।

दासो दासी च निवसेत् पृथगन्योऽन्यतः पुनः ।
परिचयेनानुचितेनानेतुं गर्हितं क्वचित् ॥
प्रभोर्गेहेऽपवादञ्च मानुमंस्थाहि दूषणम् ॥ २६ ।
विनयेन कठोरेण पानासक्तिमपथ्यकम् ।
स्वेच्छाचरणमेषाञ्च निवारय निरन्तरम् ॥ २७ ।
असत्किङ्करसंसर्गजनिताचरणात् सदा ।
रक्षात्मसन्ततीर्नष्टाः परीवाराश्च तैः कति ॥ २८ ।
विनष्टचरिताभ्यश्च रूपजीवाभ्य एव याः ।
तिष्ठावधानतो दासीच्छद्मना कर्म्म सन्ततम् ॥
अन्विष्यन्ति नाश्रयन्तानवधानपरं जनम् ।
महामारीसमाभ्यस्त्वद्दारं रुद्धं हि रक्ष च ॥ २९ ।

२६। दासदासीनामनुचितसम्बन्धं निवारयति दास इति। दासः दासी च अन्योऽन्यतः पृथक् निवसेत्। अनुचितेन परिचयेन प्रभोः परमेश्वरस्य गृहे क्वचित् गर्हितम् अपवादं दूषणं च पुनः आनेतुं मा अनुमंस्थाः।

२७। पानदोषादिनिवारणकर्त्तव्यतामाह विनयेनेति। कठोरेण विनयेन शिक्षाविधिना एषां दासानां पानासक्तिम् अपथ्यं स्वेच्छाचरणं निरन्तरं निवारय।

२८। किङ्कराणामसतां संसर्गात् सन्ततीनां दूरे रक्षणमाह असदिति। सदा नियतम् असतां किङ्कराणां संसर्गजनितात् आचरणात् आत्मसन्ततीः रक्ष। तैः किङ्करैः कति परीवाराश्च नष्टाः।

२९। असच्चरित्राभ्यो दासीभ्यो गृहरक्षणमाह विनष्टेति। विनष्टचरिताभ्यः रूपजीवाभ्यः एव च अवधानतः तिष्ठ, याः दासीच्छद्मना सन्ततं कर्म्म अन्विष्यन्ति अनवधानपरं जनं नाश्रयन्ति। महामारीसमाभ्यः ताभ्यः त्वद्द्वारं हि रुद्धं रक्ष च।

भक्त्या समग्रया नीतिघटितं विनयं सदा ।
प्रवर्त्तय च तेष्वत्र नय स्ववर्हितः पुनः ॥
प्रकृतिस्थत्वसाधुत्वपावित्र्यवर्त्मनीह तान् ॥ ३० ।
पत्रिकाः सुलभाश्चित्रयुक्ता मासिकपुस्तिकाः ।
हस्ते विन्यस्य तेषाञ्च स्युस्ते चेत् पठनक्षमाः ॥
एवं विश्रान्तिसमये मनः कर्म्माणि प्राप्स्यति ॥ ३१ ।
उपासने साधनेषु रतांस्ततोऽत्र मा च्छिदः । ३२ ।
समविश्वासिनश्चेत्ते गीतेषु पठनेषु च ।
उपासनासु यद्यत् स्यादुपयोगि च मङ्गलम् ॥
काले कालेऽनुमन्यस्व तत्र तत्र गृहोद्गते ॥ ३३ ।

३०। दासानां विनयनमाह भक्त्येति। समग्रया भक्त्या सदा तेषु दासेषु नीतिघटितं विनयं प्रवर्त्तय, स्ववर्हितः सन् तान् दासान् पुनः इह प्रकृतिस्थत्वं पानदोषवर्ज्जनवशात् विकाररहितत्वम्, साधुत्वं वञ्चना-विरहितत्वादिजनितं, पावित्र्यं विशुद्धचरित्रत्वम् तेषां वर्त्मनि नय।

३१। पत्रिका इति। चेत् यदि ते पठनक्षमाः स्युः तेषां हस्ते सुलभाः पत्रिकाः चित्रयुक्ताः मासिकपत्रिकाः विन्यस्य। एवं विश्रान्ति-समये तेषां मनः कर्म्माणि विश्रामसमयोपयोगीनि प्राप्स्यति।

३२। उपासन इति। उपासने साधनेषु रतान् तान् ततः उपा-सनादिभ्यः मा छिदः विच्छिन्नान् मा कुरु।

३३। समविश्वासिभ्यः तेभ्यः कर्त्तव्यमाह समेति। चेत् यदि ते समविश्वासिनः गीतेषु पठनेषु उपासनासु च यद् यद् तेषाम् उपयोगि मङ्गलं हितकरं च स्यात् गृहोद्गते गृहेऽनुष्ठित तत्र तत्र सङ्गीते पाठे उपासनायाम् अनुमन्यस्व उपयोगिविषये योगदाने अनुमतिं यच्छ।

परमेशो यथा दासान् तस्य नित्यं नियच्छति ।
तथा ते यच्छ दासांश्च धर्म्मेण कृपया सदा ॥ ३४ ॥

इति दासः ।

---

अनुष्ठानानि ।

अद्वितीयपरब्रह्मनाम्नानुष्ठानमेव हि ।
कृत्स्नं कुर्व्वीत नियतं गृहस्थः संशितव्रतः ॥ १ ॥
त्यजेदयुक्तधर्म्मञ्च तत्रार्चार्चनमप्यसौ ॥ २ ॥
तोषयितुं कुटुम्बान् स्वान् देवदेवान्नमेन्न सः ।
नार्च्चार्चनं नूतनं वाऽयुक्तधर्म्मं प्रवर्त्तयेत् ॥ ३ ॥
मतशुद्धिं निष्कलुषां रक्षेत् स विविधेषु च ।
निर्म्मलं स्वविवेकञ्च तत्रानुसृत्य कृत्स्नशः ॥ ४ ॥

३४। व्यादर्शमत्र दर्शयन्नुपसंहरति परमेश इति। परमेशः यथा नित्यं तस्य दासान् नियच्छति, तथा ते तव दासान् च सदा धर्म्मेण कृपया यच्छ नियमितान् कुरु ।

इति दासः ।

---

१। अनुष्ठानानि वक्तुं प्रक्रमते। अद्वितीयेति। संशितव्रतः गृहस्थः अद्वितीयपरब्रह्मनाम्ना कृत्स्नं निखिलम् अनुष्ठानम् एव हि नियतं कुर्व्वीत।

२। किन्तत्र परिवर्ज्ज्यं तन्निर्दिशति त्यजेदिति। अयुक्तधर्म्मम् अर्च्चार्चनम् अपि तत्र अनुष्ठानेषु असौ गृहस्थः त्यजेत् ।

३। तोषयितुमिति। स्वान् कुटुम्बान् तोषयितुं स गृहस्थः देवदेवान् न नमेत्। नूतनम् अर्च्चार्चनम् अयुक्तधर्म्मं वा न प्रवर्त्तयेत् ।

४। मतशुद्धिमिति। स विविधेषु अनुष्ठानेषु च निष्कलुषां मतशुद्धिं रक्षेत् कृत्स्नशः स्वविवेकम् अनुसृत्य तं विवेकं निर्म्मलं रक्षेत् ।

माभूस्त्वमनुरक्तोऽत्र वाह्यपद्धतिषु क्वचित् ।
आड़म्बरप्रपूर्णेषु प्रतिमाकरणेषु च ॥
वाह्यप्रदर्शनं दृश्याड़म्बरञ्च परित्यज ॥ ५ ।
हृदयानि च वान्यत्रासक्तानि विषयानिह ।
इन्द्रियाणां हि काङ्क्षन्ति न तु तान् पुनरात्मनाम् ॥
वाह्यक्रियापरत्वाधिक्येषु धावन्ति तानि च ॥ ६ ।
पद्धतिभिश्च शून्याभिर्मात्मानं भारपीड़ितम् ।
कार्षीः संश्रय ताएव याश्चात्मा परिकाङ्क्षति ॥
प्रयोजनञ्च तस्यात्र तत्साधनानि ता न तु ।
तत्साधनं स चात्मा स्युरन्यथा निष्फलाहि ताः ॥ ७ ।
आमोदं सहजेष्वेव परमात्मप्रसूतयः ।
वहन्ति न च वाह्येषु क्रियाधिक्येषु जातुचित् ॥ ८ ।

५ । मा भूरिति । त्वं क्वचित् अत्र वाह्यपद्धतिषु आड़म्बरप्रपूर्णेषु प्रतिमाकरणेषु च अनुरक्तः मा भूः वाह्यप्रदर्शनं दृश्याड़म्बरं च परित्यज ।

६ । हृदयानीति । यानि च हृदयानि अत्र आसक्तानि तानि इह इन्द्रियाणां विषयान् न तु पुनः आत्मनां विषयान् काङ्क्षन्ति । तानि च हृदयानि वाह्यक्रियापरत्वाधिक्येषु धावन्ति ।

७ । पद्धतिभिरिति । शून्याभिः पद्धतिभिः च मा आत्मानं भारपीड़ितं कार्षीः । ता एव पद्धतीः संश्रय याः आत्मा परिकाङ्क्षति तस्य आत्मनः प्रयोजनं च । अत्र ताः पद्धतयः तत्साधनानि तस्य आत्मनः साधनानि । न तु स च आत्मा तत्साधनम् तासां पद्धतीनां साधनम् । अन्यथा यदि न आत्मनः प्रयोजनसाधनानि भवेयुः ताः निष्फलाः स्युः ।

८ । आमोदमिति । परमात्मप्रसूतयः सहजेषु विषयेषु एव आमोदं वहन्ति न च जातुचित् वाह्येषु क्रियाधिक्येषु ।

न विशेषकृतार्थत्वमनुष्ठानेषु विद्यते।
क्रियासु च गुणाः शुद्धिकृत् पद्धतिषु वस्तुषु ॥ ९ ।
न काचिच्छुक्तिदा शक्तिर्मर्त्यस्यापि चात्मनि।
क्रियाया मन्यमानस्य पावनस्य च पावनम् ॥ १० ।
पुष्पाणि पीतकादीनि गन्धद्रव्याणि यानि च।
अग्निरापः पताका च तथा चित्रपटा इह ॥
भक्तौ सहायास्ते शोच्याः पावनानीति वादिनः ॥ ११ ।
कालश्चर्तुश्च मासश्च नियोज्यः साधनोत्थिते।
अभिप्राये विशेषे वा यच्च पावन इत्यतः ॥
प्रतीयतेऽत्र शोच्योऽसौ तस्मिंस्तस्मिन् पवित्रताम्।
आरोप्यान्यत्र मौढ्याच्चेत् विपरीतं विनिर्दिशेत् ॥ १२ ।

९। नेति। अनुष्ठानेषु क्रियासु च विशेषकृतार्थत्वं न विद्यते। पद्धतिषु वस्तुषु शुद्धिकृत् गुणः न विद्यते।

१०। न कदाचिदिति। मर्त्यस्य अपि च क्रियायाः आत्मनि स्वस्मिन् न काचित् मुक्तिदा शक्तिः। पावनस्य च पावनं मन्यमानस्य वस्तुनः न काचित् मुक्तिदा शक्तिरिति शेषः।

११। पुष्पाणीति। पुष्पाणि पीतकादीनि अगुरू[illegible]णि यानि च गन्धद्रव्याणि अग्निः आपः पताका च तथा चित्रपटाः इह भक्तौ सहायाः। ते शोच्याः ये पावनानि इति वादिनः। एतानि पवित्रतासाधकानीति ये वदन्ति ते कृपापात्राणि।

१२। कालइति। कालः च ऋतुः च मासः च विशेषे साधनोत्थिते यज्ञे वा अभिप्राये नियोज्यः। अतः पावनः पवित्रतासाधकः इति प्रतीयते। अत्र सः शोच्यः यः तस्मिन् तस्मिन् पवित्रताम् आरोप्य मौढ्यात् चेत् यदि अन्यत्र विपरीतं पवित्रताहीनत्वं विनिर्दिशेत्।

पाठः प्रवचनानान्तु कृत्यान्यपि पुरोधसाम् ।
अभिषेको व्रतञ्चात्र सत्यं कार्य्यकरं तथा ॥
अभिप्रायसाधनञ्च प्रोच्योऽसौ मन्यते यदि ।
ऋते तत्तत् पावनं न मुक्तिः केनापि लभ्यते ॥ १३ ।
अथापि त्वं क्रियाश्चानुष्ठानानि प्रभुणा स्वयम् ।
आदिष्टानि च भक्त्येह श्रद्धया निर्व्वहेः सदा ॥ १४ ।
निर्व्वर्त्त्यानि पुण्यकृत्यान्यथ गृह्योत्सवा यदा ।
मण्डल्या नियमान् नित्यं विनयाननुवर्त्तय ॥
स्युर्यथा गम्भीराण्येव हृदयस्पर्शि तानि च ॥ १५ ।
जनाः पवित्रमण्डल्याः सदैकविधतामिह ।
क्रियासु पद्धतिष्वत्र मूले रक्षन्तु नित्यशः ॥
आचारपरिग्रहं यद्रुचिप्रयोजनान्यनु ।
भवितुं भवतु प्रायः शाखास्वङ्गेषु भिन्नता ॥ १६ ।

१३ । पाठ इति । प्रवचनानां तु पाठः, पुरोधसां पुरोहितानां कृत्यानि अपि, अभिषेकः व्रतं च अत्र सत्यं कार्य्यकरं, अभिप्रायसाधनं च, असौ प्रोच्यः यदि मन्यते तत् तत् पावनम् ऋते विना न केन अपि मुक्तिः लभ्यते ।

१४ । अथापीति । अथापि एवं सत्यपि क्रियाः अनुष्ठानानि च स्वयं प्रभुणा आदिष्टानि इह भक्त्या श्रद्धया च सदा निर्व्वहेः ।

१५ । निर्व्वर्त्त्यानीति । यदा पुण्यकृत्यानि निर्व्वर्त्त्यानि अथ गृह्योत्सवाः निर्व्वर्त्त्याः तदा नित्यं मण्डल्याः नियमान् विधीन् विनयान् शासनानि तथा अनुवर्त्तय यथा तानि अत्र गम्भीराणि हृदयस्पर्शि भवन्ति ।

१६ । जना इति । पवित्रमण्डल्याः जनाः इह सदा क्रियासु पद्धतिषु मूले एव एकविधतां रक्षन्तु । आचारपरिग्रहं रुचिप्रयोजनानि अनु भवितुं, यथा ताः आचारादिभेदेन उपयोगिन्यः भविष्यन्ति तथा, प्रायः शाखासु अङ्गेषु भिन्नता भवतु ।

एवं क्रियासु पूजासु स्यादैक्यं निलयेषु च ।
मण्डल्यामनुरक्तानामद्वितीये परेश्वरे ॥ १० ॥

इत्यनुष्ठानसूत्रम् ।

—०—

जातकर्म्म ।

स्यादानन्दोत्सवस्तत्र जातायां सन्ततौ गृहे ॥ १ ॥
कृतज्ञतायाश्वासस्य प्रकाशेनोपयोगिना ।
प्रथयेद्घटनां तां च गृही प्रमुदितस्तदा ॥ २ ॥
अमरस्यात्मनस्त्वागमनं जन्म न किं पुनः ।
प्रतियोद्धुमकल्याणं राज्यं स्थापयितुं क्षितौ ॥
स्वर्गीयं किं भटस्यास्य प्रवेशो नूतनस्य न ।
कार्य्यञ्चेति प्रभोः कर्म्मकृतां श्रेणीविवर्द्धनम् ॥ ३ ॥

१०। एवमिति। एवं निलयेषु गृहस्थानां गृहेषु अद्वितीये परेश्वरे परमेश्वरे अनुरक्तानां मण्डल्यां क्रियासु ऐक्यं स्यात्।

इत्यनुष्ठानसूत्रम्।

—०—

१। अनुष्ठानेषु सर्व्वप्रथमं जातकर्म्म प्रवक्तुमुपक्रमते स्यादिति। गृहे सन्ततौ जातायाम् आनन्दोत्सवः स्यात्।

२। कृतज्ञताया इति। कृतज्ञतायाः श्वासस्य आश्वासस्य उपयोगिना प्रकाशेन प्राकट्येन तदा तां घटनां गृही प्रमुदितः सन् प्रथयेत्।

३। कृतज्ञताश्वासप्रकाशे हेतुमाह अमरस्येति। किं पुनः जन्म अमरस्य आत्मनः तु आगमनम् न ? अकल्याणम् अमङ्गलं प्रतियोद्धुं क्षितौ पृथिव्यां स्वर्गीयं राज्यं स्थापयितुं किं न नूतनस्य भटस्य योद्धुः प्रवेशः ? प्रभोः कार्य्यञ्चेति किं न कर्म्मकृतां श्रेणीविवर्द्धनम् ? तत्प्रवेशेन संख्यावृद्धिः, गृहलोकनभसि गृहरूपो यो लोकः तस्य नभसि आकाशे पित्रोः मातापित्रोः हर्षं वर्द्धयितुं किं न आशानन्दकरस्य नक्षत्रस्य च उदयः ?

गृहलोकनभस्येकस्याश्वानन्दकरस्य च ।
नक्षत्रस्योदयोत्सवं पित्रोर्वर्द्धयितुं न किम् ॥ ३ ।
सन्ततिः किं विधातुर्न महार्घं दानमुत्तमम् ।
स्नेहानुरञ्जितायाः किं दयाया नो निदर्शनम् ॥ ४ ।
नवजातः शिशुः किन्नु दिव्यवार्त्ताहरस्त्विह ।
निर्द्दोषत्वस्य सौन्दर्य्यस्यानने प्रतिमा प्रभोः ॥ ५ ।
किमिमां घटनां गृह्यामौदासीन्येन पश्यसि ॥ ६ ।
नन्द पिता च माता च भ्राता च भगिनी तथा ।
यूयं नन्दत सर्व्वेऽत्र परमेशगृहे पुनः ॥
मोदध्वं यूयमेतस्मिन् स्वजनाः प्रतिवेशिनः ।
दिव्यवार्त्ताहरायास्मै प्रोज्ज्वलाय प्रदीयताम् ॥
स्वागताभाषणं हृद्यं योग्यं ग्रहणकर्म्म च ।
कृपालप्रभवे धन्यवादमुद्गिरतोच्चितम् ॥ ७ ।

४ । सन्ततिरिति । किं न सन्ततिः विधातुः परमेश्वरस्य महार्घं महामूल्यम् उत्तमं दानम् ? किं न स्नेहानुरञ्जितायाः स्निग्धभावविभूषितायाः दयायाः निदर्शनम् ?

५ । नवजात इति । किं नु नवजातशिशुः इह निर्द्दोषत्वस्य सौन्दर्य्यस्य दिव्यवार्त्ताहरः स्वर्गीयदूतः ? आनने अस्य शिशोरिति शेषः प्रभोः ईश्वरस्य प्रतिमा । तस्मिन् तच्छुद्धतायाः प्राकट्यम् ।

६ । किमिति । किम् इमां गृह्यां गृहसम्पर्कीयां घटनाम् औदासीन्येन त्वं पश्यसि ?

७ । अतएवानन्दप्रकाशे प्रवर्त्तयति नन्देति । पिता च माता च भ्राता च तथा भगिनी प्रत्येकं नन्द आनन्द प्रकाशय । परमेशगृहे यूयं पुनः सर्व्वे नन्दत । एतस्मिन् कल्याणकर्म्मणि हे स्वजनाः प्रतिवेशिनः यूयं मोदध्वम् । अस्मै प्रोज्ज्वलाय दिव्यवार्त्ताहराय स्वर्गीयदूताय हृद्यं योग्यं

जन्मानन्तरमेवायं विधौतः सुपरिष्कृतः ।
अभ्यक्तः सर्व्वथा शुक्लवाससा नूतनेन च ॥
सम्भाव्येमं शिशुं मातृसन्निधौ सन्निधापयेत् ॥ ८ ।
आह्लादेन च तं पश्येत् शिशुं माता विचुम्बयेत् ।
स्नेहेनोच्छ्वसितेनात्रापत्यजन्मजन्मना ॥ ९ ।
प्रार्थिभावेन सा चैवं प्रार्थयेदाशिषं ततः ।
प्रभो तव प्रदत्तस्य नवजातशिशोर्मुखम् ॥
दृष्टवत्यस्मि दानार्थं धन्यवादं ददाम्यहम् ।
आशिषं स्थापयास्मिंस्ते तवैव त्वं कुरु त्विमम् ॥ १० ।
ततः पिता समागच्छेत् पश्येच्च प्रार्थयेत् तथा । ११ ।

स्वागताभाषणं गृहागतस्मै च प्रदीयताम् । कृपालुप्रभवे कृपामयाय परमेश्वराय उच्छ्वसितं धन्यवादम् उद्गिरन्त प्राचुर्य्येण प्रयच्छत ।

८ । जन्मानन्तरं किं कर्त्तव्यं तदेवाह । जन्मानन्तरं सर्व्वथा अयं शिशुः विधौतः सुपरिष्कृतः अभ्यक्तः तैलाभ्यङ्गयुक्तः स्यात् । नूतनेन च शुक्लवाससा सम्भाव्य इमं शिशुं मातृसन्निधौ सन्निधापयेत् ।

९ । मातुः कृत्यमाह आह्लादेनेति । माता तं शिशुम् आह्लादेन पश्येत्, असौ माता अपत्यजन्मजन्मना सन्तानजन्मोत्पन्नेन उच्छ्वसितेन स्नेहेन शिशुं विचुम्बयेत् ।

१० । तस्याः प्रार्थनमाह प्रार्थिभावेनेति । ततः प्रार्थिभावेन सा माता च एवम् आशिषं प्रार्थयेत्, हे प्रभो, त्वया प्रदत्तस्य नवजातशिशोः मुखं दृष्टवत्यस्मि, दानार्थमहं तुभ्यं धन्यवादं ददामि । अस्मिन् तव आशिषं स्थापय, इमं तु शिशुं तवैव त्वं कुरु ।

११ । पितृकर्त्तव्यमाह तत इति । ततः तदनन्तरं पिता समागच्छेत्, पश्येत् तथा पूर्व्वोक्तरूपां प्रार्थयेत्

स्वसारो भ्रातरः सम्बन्धिनश्चागम्य तन्मुखम् ।
मुदा कृतज्ञाः पश्येयुः प्रार्थयेयुर्हृदाशिषम् ॥ १२ ।
तमतीव प्रयत्नेनाष्टाविंशतिदिनानि हि ।
पालयेन्नियमान् स्वास्थ्यविधेः शुद्धेश्च सूतके ॥
जलानिलगृहादीनां वैद्यानामुपदेशतः ।
दार्ढ्येनानुसरेन्न्यासमिव तं लोकयेत् पुनः ॥ १३ ।
जन्मतो मासि जातस्य जातकर्म्म विधीयते ॥ १४ ।
प्रत्यग्रैः कुसुमैः पूजागृहं तत्र विशोभयेत् ॥ १५ ।
प्रातः समापिते चांशे त्वाचार्य्येण यथाविधि ।
असतो नः सद्गमयेत्यन्ते चोपासनस्य तु ॥
यज्ञवेदीसमीपेऽत्र पिता स्थित्वा पदोपरि ।
इमाञ्च प्रार्थनां कुर्य्यात् कृतज्ञहृदयेन तु ॥ १६ ।

१२। भ्रात्रादीनां कर्त्तव्यमाह स्वसार इति। स्वसारः भगिन्यः भ्रातरः सम्बन्धिनः आत्मीयाः आगम्य मुदा हर्षेण तन्मुखं कृतज्ञाः सन्तः पश्येयुः, हृदा आशिषं प्रार्थयेयुः।

१३। सूतिकागृहे किं किं कर्त्तव्यं तदाह तमिति। सूतके सूतिकागृहावस्थानकाले अष्टाविंशतिदिनानि तं शिशुम् अतीव यत्नेन पालयेत्। स्वास्थ्यविधेः जलानिलगृहादीनां शुद्धेः च नियमान् वैद्यानां चिकित्सकानाम् उपदेशतः दार्ढ्येन अनुसरेत्, तं शिशुं पुनः न्यासम् इव लोकयेत् पश्येत्।

१४। जातकर्म्मदिनमाह जन्मत इति। जन्मतः जन्मदिनात् मासि जातस्य शिशोः जातकर्म्म विधीयते।

१५। पूजागृहपरिकर्म्माह प्रत्यग्रैरिति। प्रत्यग्रैः नवीनैः कुसुमैः तत्र जातकर्म्मदिने पूजागृहं विशोभयेत्।

१६। प्रातरिति। प्रातः आचार्य्येण असतो नः सद्गमय इत्यन्ते उपासनस्य तु अंशे यथाविधि हि समापिते यज्ञवेदीसमीपे पिता पादोपरि स्थित्वा कृतज्ञहृदयेन तु इमां च प्रार्थनां कुर्य्यात्।

गर्भे मातुः प्रयत्नेन स्नेहेन रक्षितः शिशुः ।
अरक्षितोऽसहायोऽयं कृपामय विभो त्वया ॥
व्याधितो विपदो विघ्नात्तथ्यं तदर्पयाम्यहम् ।
धन्यवादं तमस्यस्य रहस्यङ्गानि शिल्पिना ॥
शिल्पसौष्ठवयुक्तानि सौन्दर्य्यानुगुणानि च ।
नैपुण्येन त्वया सुष्ठु निरमायिषताखिलम् ॥
दत्तं साधनजातं यत धन्यवादं ददाम्यहम् ।
सेवार्थं ते जनानाञ्च कर्त्तुं कर्म्म तव प्रभो ॥
काले पूर्णे धराधाम्न्यानीतवान् त्वं स्वयं शिशुम् ।
कृतज्ञोऽहं नमाम्यग्रे यदेतद्दानकारणम् ॥
नूतनं प्रेमचिह्नं ते ह्लादः सम्पत्तिरेव यत् ।
प्रत्यक्षविषयं कर्त्तुं दायित्वं मे समापितुम् ॥
विश्वस्तेन च भावेन सेवकत्वं तवाशिषम् ।
याचेऽनुभूय दौर्बल्यमपूर्णत्वं क्षिपाम्यहम् ॥
आत्मानं तव नेतृत्वे प्रणतः प्रार्थयामि ते ।
विश्वासस्य बलं सत्यं पितृस्नेहञ्च यत् शिशुः ॥

१७। प्रार्थनामाह गर्भे इति। हे कृपामय विभो, अहं धन्यवादमर्पयामि, त्वयायमरक्षितोऽसहायः शिशुः मातृगर्भे प्रयत्नेन स्नेहेन रक्षितः तमसि रहसि शिल्पिना त्वया यत् अस्य शिल्पसौष्ठवयुक्तानि सौन्दर्य्यानुगुणानि अङ्गानि नैपुण्येन सुष्ठु निरमायिषत, अखिलं साधनजातं दत्तम्, तत् अहं धन्यवादं ददामि। काले पूर्णे जनानां सेवार्थं तव कर्म्म च कर्त्तुं, हे प्रभो, त्वं स्वयं शिशुं धराधाम्नि आनीतवान्। यदाहमेतद्दाननिमित्तं कृतज्ञः अग्रे नमामि, यद्दानं तव नूतनं प्रेमचिह्नं, सम्पत्तिः आह्लादश्च, मम दायित्वं प्रत्यक्षविषयं कर्त्तुं विश्वस्तेन च भावेन मम सेवकत्वं समापितुं तव आशिषं याचे। अपूर्णत्वं दौर्बल्यञ्चानुभूय आत्मानं तव नेतृत्वे क्षिपामि, प्रणतस्ते प्रार्थयामि विश्वासं बलं सत्यं पितृस्नेहञ्च यत्

रक्षामि रक्षणे यत्ने तवानुरक्तदासवत् ।
पालयामि च त्वत्कार्य्यसाधनायाशिषा प्रभो ॥
सम्भावय भवास्य त्वं पिता माता सुहृच्च यत् ।
सर्व्वविधादकल्याणाद्दूरं विश्राम्यतु त्वयम् ॥
स्नेहक्रोड़े चिरञ्चास्य गृहस्येश्वर नित्यदा ।
नवजातं शिशुञ्चेमं पितुर्मातुश्च नन्दनम् ॥
अन्वर्थं कुरु सर्व्वत्र परिवारस्य चाशिषम् ।
महिमानं त्वत्कृपार्थं स्वीकुर्म्मः शिव शाश्वतम् ॥ १७ ।
आशीर्व्वचनमाचार्य्यस्ततः स समुदीरयेत् ।
शान्तिः शान्तिः शान्तिरिति सर्व्वे ब्रूयुः समस्वरैः ॥ १८ ।
समाप्तौ कर्म्मणोऽन्ते स्यात् सङ्गीतं ह्युपयोगि च ॥ १९ ।

इति जातकर्म्म ।

---

अनुरक्तदासवत् शिशुं तव रक्षणे यत्ने च रक्षामि, त्वत्कार्य्यसाधनाय च पालयामि। इमं शिशुमाशिषा सम्भावय, अस्य पिता माता सुहृच्च भव, यदयं सर्व्वविधादकल्याणाद्दूरं तव स्नेहक्रोड़े चिरं विश्राम्यतु। हे अस्य गृहस्येश्वर, इमं नवजातं शिशुञ्च पितुर्मातुश्च नन्दनमन्वर्थं कुरु परिवारस्य चाशिषम्। हे शिव, त्वत्कृपार्थं शाश्वतं ते महिमानं स्वीकुर्म्मः।

१८। आशीरिति। ततः स आचार्य्यः आशीर्व्वचनं समुदीरयेत्, सर्व्वे समस्वरैः शान्तिः शान्तिः शान्तिः इति ब्रूयुः।

१९। समाप्ताविति। कर्म्मणः समाप्तौ अन्ते उपयोगि च सङ्गीतम् स्यात्।

इति जातकर्म्म ।

---

## नामकरणम् ।

षण्मासि जन्मतो नामकरणन्तु विधीयते ॥ १ ।
नयेत्तद्दिवसे स्नानागारं स्नानाय सन्ततिम् ॥ २ ।
पुष्पवासिततैलेनाभ्यञ्जयेत् कलसात्पुनः ।
नवीनान्निर्म्मलाद्वारि तन्मूर्द्धि चाभिषिचयेत् ॥
देहञ्चोद्वर्त्तयेदस्य कुर्य्यात्तं विमलं शुभम् ॥ ३ ।
आच्छादयेत्तदा नव्यतत्कालोचितवाससा ।
भूषयेत् सुष्ठु नात्यन्तमवस्थोचितभूषणैः ॥ ४ ।
संघृष्टैश्चन्दनैर्भालञ्चाचाराच्चर्च्चितं कुरु ॥ ५ ।
ततः प्रभृति चातोद्यघोषो जातीय उत्सवे ।
आमोदं योजयत्वत्र यथाचारोऽस्ति प्राक्तनः ॥ ६ ।

१। अथ नामकरणानुष्ठानं वक्तुं तत्समुचितकालमाह षण्मासीति। जन्मतः षण्मासि नामकरणं तु विधीयते ।

२। नयेदिति। तद्दिवसे नामकरणानुष्ठानदिवसे स्नानाय तं शिशुं स्नानागारं नयेत् ।

३। पुष्पेति। तं शिशुं पुष्पवासिततैलेन अभ्यञ्जयेत्, नवीनात् निर्म्मलात् कलसात् पुनः वारि तन्मूर्द्धि च अभिषिचयेत्, तस्य देहं च उद्वर्त्तयेत् शुभं तं विमलं कुर्य्यात् ।

४। आच्छादयेदिति। तदा नव्यतत्कालोचितवाससा अवस्थोचित-भूषणैः नात्यन्तं किन्तु हि सुष्ठु भूषयेत् ।

५। संघृष्टैरिति। चन्दनैः संघृष्टैः आचारात् देशाचारानुसारतः भालं ललाटं चर्च्चितं कुरु ।

६। तत इति। ततः प्रभृति उत्सवे जातीयः आतोद्यघोषः यथा प्राक्तनः आचारः अस्ति तथा, अत्र आमोदं योजयतु ।

गृह्योपासननिलयेऽन्यत्र वा विनियोजिते ।
तदर्थं पुष्पवस्त्रादिविचित्रध्वजशोभिते ।
स्वजना बान्धवाः सर्व्वे विशेयुर्मिलितास्तदा ॥ ७ ।
गृहस्थः सपरीवारो यस्याचार्य्यस्य मण्डली ।
पुरोहितः स एव स्यादुपाध्यायोऽथवा पुनः ॥
कश्चित् प्रचारको वाथ मण्डलीज्येष्ठ एव वा ॥ ८ ।
निर्द्दिष्टोपासनायास्त्वसतोन इति दान्तिमे ।
अंशे निवृत्त आचार्य्येणानीयेत च सन्ततिः ॥ ९ ।
पितापत्यं नयेत्तत्र बाहौ चारोप्य वक्षसि ।
रक्षन् दण्डायमानोऽयं मण्डल्यां वेदिसन्निधौ ।
ईदृशा विधिना कुर्य्यात् प्रार्थनां श्रद्धयान्वितः ॥ १० ।
अहो विश्वपते प्रीतिं वहामस्त्वयि सन्ततम् ।
विश्वसिमः पूजयामो नित्यं नो गृहदेववत् ॥
तुभ्यं मम प्रियापत्यमर्पयामि ह्युपानयन् ।
पितः कृपानिधान त्वमरक्षो ह्यसहायकम् ॥

७। गृह्येति। तदा स्वजनाः बान्धवाः सर्व्वे गृह्योपासननिलये तदर्थं विनियोजिते पुष्पवस्त्रादिविचित्रध्वजशोभिते अन्यत्र वा विशेयुः।

८। गृहस्थ इति। सपरीवारः गृहस्थः यस्य आचार्य्यस्य मण्डली स आचार्य्यः एव, उपाध्यायः, अथवा पुनः प्रचारकः अथवा मण्डलीज्येष्ठः एव वा पुरोहितः स्यात्।

९। निर्द्दिष्टेति। निर्द्दिष्टोपासनायाः "असतोनः" इति अन्तिमे अंशे निवृत्ते च आचार्य्येण सन्ततिः आनीयेत।

१०। पितेति। पिता तत्र अपत्यं नयेत्, बाहौ च आरोप्य वक्षसि रक्षन् मण्डल्यां मण्डलीमध्ये वेदीसन्निधौ अयं श्रद्धया अन्वितः ईदृशा विधिना प्रार्थनां कुर्य्यात्।

अपुष्णा वत्सला माता नित्यं स्तन्यं[illegible] स्वयम्।
त्वत्स्तनोपहृतेनेदं पयसा जीवनेन [illegible]
मधुरेणावृधत् भक्त्या कायेनाद्य दिनं दिनम्।
आह्वयः सन्निधावर्पयितुं कृत्वोपयोगि च॥
नाम येन त्वभिहितं ज्ञातं स्यात् संहृतौ सदा।
व्यक्तित्वेन च तत् संस्थापयिष्यति च संसदि॥
मनुष्यपरिवारस्यार्पयितुं पुनरङ्गवत्।
कठिनं खाद्यमस्याद्य मुखे स्तन्यं विवर्त्तयन्॥
शैशवोचितमानन्दे विघोषयितुमुत्सवे।
मनुष्यत्वे प्रवेशञ्च गृहाण परमेश्वर॥
एतत्सर्व्वं कृपार्थं मे स्तुतिवादान् सभक्तिकान्।
आनन्दितहृदायातुं कृतज्ञत्वेन सन्निधौ॥

११। अहो इति। अहो विश्वपते, त्वयि सन्ततं प्रीतिं वहामः, विश्वसिमः, नित्यं त्वां नो गृहदेववत् पूजयामः, मम प्रियापत्यम् उपानयन् तुभ्यम् अर्पयामि। हे कृपानिधान पितः, असहायकर्मिषु त्वम् आश्रयः, अपुष्णाः वत्सला माता सती स्वयं नित्यं स्तन्यम् अधाः, त्व[illegible]स्तनोपहृतेन मधुरेण जीवनेन पयसा इदं दिनं दिनं भक्त्या कायेन अत्र अवृधत्। उपयोगि कृत्वा नाम अर्पयितुं येन नाम्ना अभिहितं, संहृतौ व्यक्तित्वेन च ज्ञातं स्यात्, मनुष्यपरिवारस्य पुनः अङ्गवत् तद्व्यक्तित्वं च संसदि संस्थापयिष्यति, अद्य अस्य मुखे शैशवोचितं स्तन्यं विवर्त्तयन् कठिनं खाद्यम् अर्पयितुं उत्सवे आनन्दमध्ये मनुष्यत्वे प्रवेशञ्च घोषयितुं सन्निधौ आह्वयः। हे परमेश्वर, एतत्सर्व्वकृपार्थं मम सभक्तिकान् स्तुतिवादान् गृहाण, आनन्दितहृदा पूर्णेन कृतज्ञत्वेन च तव सन्निधौ आयातं, यत अस्य भाविगौरवं संरक्षितम् आरब्धः तद्वतोः एतत् अपत्यम्

पूर्णेन तव चास्माकं सहायोऽर्पयितुं भव ।
चरणेऽपत्यमेतच्चारब्धः सञ्चितमस्य यत् ॥
गौरवं भावि तद्धेतोः कृपयाशिषमर्पय ।
पुत्त्रकं तव नामाय देहि स्थानञ्च त्वद्गृहे ॥
उपयुक्तं यदा चास्य देहिकाद्यस्तु संस्थितौ ।
लभते पदमात्मास्य परमात्मन् पदं दिवि ॥
अमरेषु यथा वर्द्धमानो भवतु ते कृपा ।
चक्षुभ्यश्च बलं देहि तथा शिक्षयितुं यथा ॥
भविष्यति पुनश्चैतत् भवेत् कर्त्तव्यपालकम् ।
सन्तानं भक्तो विश्वस्तः सत्यमानन्ददन्त्विदम् ॥
कुरु पित्रोर्भूषणञ्च परिवारस्य नित्यदा ।
भवानेन प्रियेणैतद्यत्नेनानुग्रहेण ते ॥
कुरु त्वमृद्धिमन्नित्यं पुत्त्रस्य च दयावतः ।
नाम्नस्ते गौरवं मानो ह्यनन्तकालमस्तु च ॥ ११ ॥

तव चरणे अर्पयितुम् अस्माकं सहायो भव । कृपया तव आशिषं पुत्त्रकस्य अर्पय । अस्य नाम त्वद्गृहे उपयुक्तं स्थानं च देहि । यदा च अस्य देहिकाद्यं संस्थितौ पदं लभते, तदा ते कृपा भवतु, यथा हे परमात्मन्, अस्य आत्मा वर्द्धमानः दिवि अमरेषु पदं लभते । चक्षुभ्यश्च तथा शिक्षयितुं बलं देहि, यथा भविष्यति पुनः एतत् तव कर्त्तव्य-पालकं सन्तानं विश्वस्तः भक्तः च भवेत् । सत्यम् इदं पित्रोः आनन्ददं परिवारस्य भूषणं च कुरु । अनेन प्रियेण नित्यदा भव, तव यत्नेन अनुग्रहेण नित्यम् ऋद्धिमत् कुरु । दयावतः पुत्त्रस्य च ते नाम्नः गौरवं मानः अनन्तकालम् अस्तु च ।

आचार्य्योऽथ ततस्तस्मिन् समुपस्थापिते शिशौ ।
एवं स कुर्य्यात्तन्नाम श्रीमती श्रमुकस्य वै ॥
अमुको श्रीमती श्रीमानमुको वेति सन्निधौ ।
सर्व्वशक्तिमतस्तस्य विश्वस्तजनसंहतेः ॥
पुत्र्यै पुत्राय वा नाम ददामि करुणामयः ।
सौभाग्यमाशिषञ्चास्मै ददातु शिशवे प्रभुः ॥ १२ ॥
कण्ठे माल्यं प्रदायास्य ललाटेऽस्य विचुम्ब्य च ।
आचार्य्य आशिषा युञ्ज्यादेवमङ्कस्थितं शिशुम् ॥
नाम्ना दयावतस्तस्य परमेशस्य नः शिशो ।
आशासे त्वां प्रियं यत्नाधीनतायां न्यस्यामि च ॥ १३ ॥
शान्तिः शान्तिः शान्तिरिति सर्व्वे वाचयेयुस्ततः ॥ १४ ॥
आशीःसंप्रार्थनस्यान्ते सङ्गीतस्य च पूर्णता ॥ १५ ॥

१२। आचार्य्योऽथ इति। ततः तस्मिन् शिशौ आचार्य्योऽथ समुपस्थापिते, एवं स तन्नाम कुर्य्यात्—सर्व्वशक्तिमतः तस्य विश्वस्तजनसंहतेः सन्निधौ [illegible] अमुकस्य पुत्र्यै पुत्राय वा श्रीमती अमुकी श्रीमान् अमुकः वा इति नाम ददामि, प्रभुः करुणामयः अस्मै शिशवे सौभाग्यम् आशिषं च ददातु।

१३। कण्ठ इति। अस्य शिशोः कण्ठे माल्यं प्रदाय अस्य ललाटे च विचुम्ब्य आचार्य्यः एवम् अङ्कस्थितं शिशुम् आशिषा युञ्ज्यात्,—तस्य दयावतः नः परमेशस्य नाम्ना, हे शिशो, आशासे, प्रियं त्वां तस्य च यत्नाधीनतायां न्यस्यामि।

१४। शान्तिरिति। ततः सर्व्वे शान्तिः शान्तिः शान्तिः इति वाचयेयुः।

१५। आशीरिति। आशीःसंप्रार्थनस्य सङ्गीतस्य च अन्ते पूर्णता नामकरणानुष्ठानस्येति शेषः।